कविहृदयम् -

# सार्थकं जन्म

**परिवर्तिनि संसारे मृतः को वा न जायते ।**
**स जातो येन जातेन याति वंशः समुन्नतिम् ॥**

सांसारिकजीवनम्- एतत् चक्रम् इव। निरन्तरं तत् परिवर्तते। अतः एव यः जातः सः कदाचित् मरणं प्राप्नोति एव। 'जातस्य मरणं ध्रुवम्।' तथैव यः मृतः तस्य जन्म अपि निश्चितम्। 'पुनरपि जननं, पुनरपि मरणं, पुनरपि जननीजठरे शयनम्' एतत् सहजम्।

एवं अस्मिन् संसारे मृतः पुनः जन्म प्राप्नोति एव। सः चिरकालं जीवेत् अपि। किन्तु चिरकालं निरर्थकजीवनेन किं वा प्रयोजनम्? यत् प्राप्तं तत् भक्षयन्तः काकाः अपि चिरकालं जीवन्ति। (मरणं न प्राप्तम् इति कारणतः?) किन्तु तेन किमपि सार्थक्यं नास्ति किल?

वस्तुतः तस्य एव जन्म सार्थकं, यश्च स्वयं कीर्तिमान् सन् स्वकुलम् उद्दीपयति। लोककल्याणकार्यैः एव सः एवं कीर्तिं प्राप्तुम् अर्हति।

यथा आत्महितकार्यम् अनिवार्यं कर्तव्यं तथैव लोकहितकार्यम् अपि अवश्यकरणीयं कर्तव्यम्। यतः स्व-उन्नतौ परिवारस्य इव समाजस्य अपि विशेषपात्रत्वम् अस्ति। बहुषु अंशेषु मानवः समाजेन उपकृतः भवति। अतः लोकहितकार्यं जीवनस्य अविभाज्यम् अङ्गं स्यात्।



# चन्दमामा

अक्टोबर – १९८५

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# वाचकेषु निवेदनम्

'चन्दमामा'प्रकाशने उपयुज्यमानस्य कर्गजस्य मूल्यम् एषु दिनेषु निरीक्षाम् अतिरिच्य प्रवृद्धम् । 'मूल्यवृद्धिभारतः वाचकाः रक्षणीयाः' इति उद्देशेन अद्यावधि बहुधा प्रयत्नः कृतः ।

किन्तु इदानीं परिस्थितिः तथा अस्ति यत् इदानीन्तन-मूल्येन वयं पत्रिकां प्रकाशयितुं न शक्नुमः एव । अतः नवम्बर्- १९८५तः 'चन्दमामा'याः एकस्याः प्रतिकृतेः मूल्ये ५०पैसात्मिका वृद्धिः भविष्यति । तन्नाम नवेम्बर-८५तः एकस्याः प्रतिकृते मूल्यं २.५० रूप्यकाणि, वार्षिकं ग्राहकशुल्कं च ३०.०० रूप्यकाणि ।

वाचकाः विक्रेतारः च एतत् परिवर्तनम् अभिलक्ष्य अस्माकं परिस्थितिं सहृदयपूर्वकं ज्ञात्वा यथापूर्वं सहकुर्वन्ति इति विश्वसिमः वयम् ।

–प्रकाशकः

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

संस्कृतं ज्ञानस्य आगरः । तत्र विज्ञानादिविषयाः यथेष्टं सन्ति । 'कोऽपि विषयः संस्कृते नास्ति इति न' इत्यादिकं वाक्यं तदा तदा शृणुमः वयम् । कुत्रचित् अत्युक्तिः स्यात् नाम । तथापि विज्ञानादिविषयाः पर्याप्तमात्रेण संस्कृते सन्ति इति तु सत्यम् एव ।

यदा विज्ञानिभिः नूतनः सिद्धान्तः प्रतिपाद्यते तदा वयं संस्कृतज्ञाः वदामः- 'एतत् पूर्वम् एव आसीत्' इति । यदि पूर्वम् एव स्यात् तर्हि किमर्थं वा प्रसिद्धिं न आनीतः ?

उदाहरणार्थं- पैथागोरस्सिद्धान्तः । पैथागोरस्महोदयेन यः सिद्धान्तः प्रतिपादितः स च शुल्बसूत्रेषु क्रिस्तात् पूर्वम् एव स्पष्टं प्रतिपादितः । तथापि पैथागोरस्कालपर्यन्तं सः सिद्धान्तः किमर्थं प्रसिद्धौ न आगतः ?

पूर्वतनानां कारणं किमपि स्यात् नाम । इतः परं वा अस्माभिः विवेकशीलैः भाव्यम् । वैज्ञानिकं दृष्टिकोणम् आश्रयणीयम् । वैज्ञानिकसरण्या एव शास्त्रविषयाः अपि प्रतिपादनीयाः ।

सम्पुटः-२ अक्टोबर-८५ सञ्चिका-७

प्रतिकृतिमूल्यम् रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-



कमाल का मज़ा...गोल्ड स्पॉट का मज़ा






## रसवार्ताः



### चोरसूचकः शुकः

कस्यचित् धनिकस्य गृहे कदाचित् चौर्यं जातम्। चोरः कः इति तु न ज्ञातम्। तद्गृहे स्थितः शुकः 'रोसी, अत्र आगच्छतु' 'राबर्ट, अत्र श्रृणोतु' इति वदति स्म। गृहस्वामिनी एतां वार्ताम् आरक्षकान् सूचितवती। एतदाधारेण आरक्षकाः स्वपञ्जिकासु उल्लिखितौ, प्रसिद्धचोरौ रोसीं राबर्टं च बन्धितवन्तः। 'गृहे कोऽपि नास्ति' इति चिन्तयन्तौ तौ चौरौ उच्चैः यत् सम्भाषणं कृतवन्तौ तत् शुकेन पुनः उच्चरितम् आसीत्।

### विलयनशीलः लोहः



'न्यू हाम्पषैर्' नगरे कयाचित् संस्थया नूतनः लोहः अन्विष्टः अस्ति। एषः लोहः चेदपि यदि जले मज्जयामः तर्हि दश-निमेषेषु विलीनः भवति। पूर्वं कुत्र आसीत् इति न ज्ञायते एष।



### जले मग्नं नगरम्

'श्रीकृष्णस्य निर्वाणानन्तरम् द्वारकानगरं समुद्रे मग्नम् अभवत्' इति महभारतकथया ज्ञायते। सद्यः डा॥ एस्. आर्. राव् महोदयस्य नेतृत्वे प्रवृत्तेन प्राच्यवस्तुविभागस्य भूखननसंशोधनेन ज्ञायते यत् क्रि. पू. १५००तमे संवत्सरे स्थितं पुरातनं किञ्चन नगरं समुद्रे मज्जितम् इति।

## भवन्तः जानन्ति वा?

१. भूमिः गोलाकारेण अस्ति इति विषयं सर्वप्रथमं कः प्रतिपादितवान्?

२. सर्वप्रथमं भूमेः परिधिपरिमाणं कः गणयित्वा उक्तवान्?

३. भूमध्यरेखायाः समीपे स्थितस्य वस्तुनः भारस्य अपेक्षया ध्रुवप्रान्ते स्थितस्य वस्तुनः भारः न्यूनं दृश्यते, किमर्थम्?

४. प्रपञ्चे एव अतिविशालं कृत्रिमं नौकानगरं कुत्र अस्ति?

५. प्रपञ्चे अतिविशाला मरुभूमिः सहरामरुभूमिः। एवं तर्हि वैशाल्येन द्वितीयस्थानीया मरुभूमिः कुत्र अस्ति?

(उत्तराणि ६५तमे पृष्टे)

# अजामिळः

पूर्वम् कन्याकुब्जे अजामिळः नाम ब्राह्मणः आसीत् । बाल्यतः सः सज्जनः एव । तारुण्ये सः कदाचित् उद्यानतः प्रत्यागमनसमये मार्गे द्यूतमद्यपानादिषु दुर्व्यसनेषु निरतान् स्वेच्छाचारिणः कांश्चन दृष्टवान् ।

तेषां स्वेच्छाव्यवहारेण अजामिळः आकृष्टः । अतः एषः अपि दुर्मार्गम् आश्रितवान् । दुर्मार्गरतः सः गृहं बान्धवान् च सर्वान् विस्मृतवान् । सुराविक्रयिकां धर्मविरुद्धम् आचरन्तीं काञ्चित् स्त्रियं परिणीय सः विलासजीवने रतः अभवत् । तस्य अष्ट पुत्राः जाताः । अन्तिमस्य पुत्रस्य नाम नारायणः ।

वार्धक्ये अजामिळः तीव्रतररोगेण पीडितः अभवत् । तदा कदाचित् यमदूताः कञ्चित् नेतुं तत्पार्श्वगृहम् आगतवन्तः । अजामिळः तान् दृष्ट्वा भीत्या स्वप्रीतिपात्रम् अन्तिमपुत्रं 'नारायण ! . .' इति आहूतवान् । एतत् श्रुत्वा देवदूताः अजामिळस्य पार्श्वे आगत्य स्थितवन्तः । तदा यमदूताः तत्र आगत्य –"एतादृशपापजीविनः समीपं भवन्तः किमर्थम् आगतवन्तः ?" इति पृष्टवन्तः । तदीयपापानि निवेदितवन्तः च । 'तथापि एषः नारायणनाम स्मृतवान् । अतः एषः विष्णुभक्तः एव' इति उक्तवन्तः देवदूताः ।

यमदूतदेवदूतानां सम्भाषणं अर्धजागरणावस्थायां स्थितः अजामिळः अस्पष्टं श्रुतवान् । तेन आत्मना कृतानि पापानि स्मरन् पश्चात्तापम् अनुभूतवान् । तत्क्षणमेव नारायणजपम् आरब्धवान् च । यमदूताः आश्चर्यं प्रकटयन्तः ततः निर्गताः । देवदूताः अजामिळाय अभयमुद्रां प्रदर्श्य अदृश्यतां गताः ।

तदारभ्य अजामिळस्य जीवने महत्परिवर्तनं दृष्टम् । 'नारायण इति पुत्रस्य नामस्मरणेन विष्णुदूताः आगताः । एवं चेत् भगवतः अपारप्रेम कीदृशं स्यात्' इति चिन्तयन् सः परमसन्तोषम् अनुभूतवान् । रोगविमुक्तेः अनन्तरं अजामिळः देवभक्त्या सदाचारेण च जीवन् गङ्गातीरे भौतिकशरीरं त्यक्त्वा विष्णुलोकं प्राप्तवान् ।






# १०

[रात्रौ वृक्षशाखायाम् उपविश्य निद्रां कुर्वन् आसीत् चन्द्रवर्मा। तदा भेरुण्डपक्षिणोः आगमनेन उत्पन्नेन वायुना सः अन्यत्र नीतः। भेरुण्डस्य पुच्छभागे पतितवान् च। तदा तत्र आगतः अग्निपक्षी 'कापालिका शङ्खमान्त्रिकसमीपम् आनेतव्या' इति भेरुण्डपक्षिणौ प्रार्थितवान्। भेरुण्डपक्षिणौ तत् अङ्गीकृतवन्तौ। तदनन्तरं . . .]

भेरुण्डपक्षिणौ निद्रायां मग्नौ। किन्तु पक्षिणः पुच्छे निलीनस्य चन्द्रवर्मणः तु निद्रा नास्ति। सः मनसि एव चिन्तितवान्- "कालनागस्य सूचनानुसारम् अहं विचित्रवृक्षस्य फलं खादितवान्। तेन च इदानीं पशुपक्षिणां सम्भाषणं ज्ञातुं शक्नोमि। एतेन कियान् उपकारः सिद्धः इति वक्तुम् एव न शक्यते। एतया शक्त्या अहं अग्निपक्षिणः वचनानि अपि ज्ञातुं शक्तवान्।

वस्तुतः मया शङ्खमान्त्रिकस्य समीपं गन्तुं शतयोजनदूरं कष्टेन क्रमणीयम् आसीत्। इदानीं तु श्वः एतौ भेरुण्डपक्षिणौ कथञ्चित् तत्र गच्छतः। अहम् एतस्य पुच्छे निलीय विनायासं तत्र गन्तुं शक्नोमि। वृक्षतः अत्र पक्षिणः पुच्छे यत् पतितवान् तेन लाभः एव जातः" इति।

अकस्मात् प्राप्तम् अदृष्टं स्मृत्वा चन्द्रवर्मा सन्तोषम् अनुभूतवान्। 'कदा सूर्योदयः भवेत्,

कदा वा अहं एतस्य पक्षिणः साहाय्येन मान्त्रिकसमीपं गच्छेयम्' इति सः उत्कण्ठया निरीक्षमाणः आसीत् ।

"कापालिकायाः ग्रहणार्थं मान्त्रिकः यत्किमपि करोतु नाम । किन्तु सा एतस्य जाले न पतति एव । सा न तादृशी मुग्धा । प्रायः ताम् आनेतुम् गन्तारौ भेरुण्डपक्षिणौ कालनागस्य आहारौ भविष्यतः । तस्याः वास्तविकं सामर्थ्यं एते पक्षिणः किं, शङ्ख-मान्त्रिकः अपि प्रायः न जानाति । अतः एव तस्याः ग्रहणार्थम् एते प्रयत्नं कुर्वन्तः सन्ति" इत्येवमादिकं चिन्तयन् चन्द्रवर्मा रात्रिं यापितवान् ।

सूर्यकिरणानां स्पर्शेन भेरुण्डपक्षिणौ जागरितौ । पक्षं प्रसारयन्तौ तौ आकाशमार्गम् अनुसृतवन्तौ । उत्तरदिशि तयोः प्रस्थानं दृष्ट्वा चन्द्रवर्मा तृप्तिम् अनुभूतवान् ।

भेरुण्डौ पर्वतान्, वनानि, ग्रामान्, नद्यः, सरोवराणि च अतिक्रममाणौ सुदीर्घप्रयाणानन्तरं कस्यचित् पर्वतस्य समीपम् आगतवन्तौ । तयोः परस्परवार्तालापेन चन्द्रवर्मा ज्ञातवान् यत् अग्रे दृश्यमानः पर्वतः एव शङ्खमान्त्रिकस्य वासस्थानम् इति ।

यस्मिन् चन्द्रवर्मा उपविष्टवान् आसीत् सः पक्षी अधः पश्यन् स्वसहचारिणम् पृष्टवान्- "मित्र ! सरोवरं दृष्टवान् वा ? पश्यतु तत्र ! गजसदृशः मकरः ! बहुदिनेभ्यः आवां मकर-मांसं न खादितवन्तौ किल ? इदानीं मकरस्य



उपरि अकस्मात् आक्रमणं कुर्वः वा ? एतेन विशेषविलम्बः अपि न भवति। अद्यतन-आहारसमस्या अपि परिहृता भवति। अतः आक्रमणं कुर्वः किल ?'' इति।

''अस्तु, एषः अवकाशः न त्यक्तव्यः'' इति वदन् सः अकस्मात् अवतीर्णः। अन्यः तम् अनुसृतवान्।

अकस्मात् यदा पक्षी अधोमुखतया प्रस्थितः तदा चन्द्रवर्मा दिग्भ्रान्तः। ग्रहणम् अदृढम् आसीत् इति कारणतः एषः निराधारः जातः। एषः अपि अधोमुखतया पतितवान्।

चन्द्रवर्मणः उपस्थितिः भेरुण्डेन यथा न ज्ञाता आसीत् तथैव तस्य पतनम् अपि तेन न ज्ञातम्। तस्य दृष्टिः तु जले दृश्यमानस्य मकरस्य उपरि एव। चन्द्रवर्मा अपि तं मकरं दृष्टवान्। ''अहम् इदानीं मकरस्य मुखे पतामि। मकरः एककवलेन मां गिलति। मम मरणं सन्निहितम्' इति चिन्तयतः तस्य शरीरे आपादमस्तकं कम्पनम् उत्पन्नम्।

अत्रान्तरे सरोवरे अकस्मात् उत्पातः उत्पन्नः। 'धडार्' इति शब्दः अपि श्रुतः। किं प्रवृत्तम् इति अजानन् चन्द्रवर्मा सरोवरे जले पतितवान्।

तौ भेरुण्डपक्षिणौ उच्चैः आक्रोशनं कुर्वन्तौ पुनः आकाशमार्गम् अनुसृतवन्तौ। एकस्य पक्षिणः पादयोः मध्ये महाकारः मकरः आसीत्। सः मकरः मरणभीत्या कम्पते स्म। यदा भेरुण्डपक्षी वेगेन आक्रमणं कृत्वा पादाभ्यां






तं मकरं गृहीतवान् तदा सरोवरे उत्पातः उत्पन्नः आसीत्।

जले पतितः चन्द्रवर्मा सरोवरस्य अन्तः गतः सन् पुनः उपरि आगतवान्। दीर्घं श्वासोच्छ्वासं कुर्वन् परितः दृष्टवान् सः। भेरुण्डपक्षिणः आक्रमणेन भीताः मकराः पलायनरताः आसन्। दीर्घाणाम् अल्पानां च तेषां पलायनेन सरोवरः अल्लोलकल्लोलः जातः।

चन्द्रवर्मा मृत्युमुखं प्रविश्य आगतः इव। भेरुण्डपक्षिणः आक्रमणतः पूर्वं यदि चन्द्रवर्मा सरोवरे पतितः स्यात् तर्हि ते मकराः तं सजीवम् अखादिष्यन्। शरीरस्य अवशेषः अपि यथा न लभ्येत तथा अकरिष्यन्। इदानीं तु तादृशभयं नास्ति। यतः मरणभीत्या पलायनरतानां तेषां मकराणाम् आहारचिन्ता कथं वा स्यात्? प्राणरक्षणं प्रथमकर्तव्यं किल?

प्राणापायात् विमुक्तः चन्द्रवर्मा सन्तोषेण तीरम् उद्दिश्य तरणं कृतवान्। तीरे वृक्षाः समूहरूपेण दृश्यन्ते स्म। तत्र तत्र वेणुगुल्माः अपि आसन्। 'यावच्छीघ्रम् एतेषां मध्यं न प्रविशामि चेत् कदाचित् शङ्खमान्त्रिकस्य सेवकानां दृष्टिगोचरः भवेयम्। अतः वेगेन तरणं करणीयम्' इति चिन्तितवान् सः।

तीरम् इतोऽपि दूरे अस्ति। तदा समीपे एव जलम् अल्लोलकल्लोलं जातम्। 'का नूतना आपत् आगता?' इति भीत्या दृष्टवान् चन्द्रवर्मा।

मृत्युमुखम् इव मुखम् उद्घाट्य कश्चन मकरः स्वपुच्छेन जलं ताडयन् वेगेन चन्द्रवर्मणः समीपम् आगच्छन् अस्ति!

अकस्मात् आगतम् अपायं ज्ञातवान् चन्द्रवर्मा। 'जलस्य उपरि भवामि चेत् मरणं निश्चितम्' इति सः ज्ञातवान् एव। अतः झटिति अन्तः प्रविशन् सरोवरतलपर्यन्तं गतवान्।

सरोवरतले एव गच्छन् सः निमेषद्वयानन्तरम् पुनः उपरि आगतवान्। हस्तं पादं च वेगेन चालयन् बाणः इव वायुवेगेन तीरं प्राप्तवान् च।

आहारः विनायासेन लब्धः इति चिन्तितवान् आसीत् मकरः। किन्तु सः अकस्मात् अदृश्यतां गतः। अपरक्षणे किञ्चिद्दूरे उपरि आगतः। तं खादितुम् इच्छन् मकरः तस्य अनुसरणम् अकरोत्। चन्द्रवर्मा तु एकश्वासेन धावन् वृक्षसमूहम् प्रविष्टवान्।




मकरः तु अपायभीत्या वृक्षसमूहं प्रवेष्टुं न इच्छति। सः चन्द्रवर्मणः गमनमार्गं किञ्चित् कालं आशादृष्ट्या दृष्टवान्। अनन्तरं निराशया सरोवरं प्रविष्टवान् च।

चन्द्रवर्मा आयासेन दीर्घं श्वासोच्छ्वासं कुर्वन् कस्यचित् वृक्षस्य अधः उपविष्टवान्। आयासपरिहारानन्तरं खड्गः तस्य स्मरणे आगतः। 'भेरुण्डपक्षितः पतनसमये खड्गः अपि पतितः स्यात् वा?' इति सन्देहः उत्पन्नः। अतः सः त्वरया कोषं दृष्टवान्। हन्त! देवः दयालुः! खड्गः कोषे एव अस्ति।

चन्द्रवर्मा कोषतः खड्गम् आकृष्य खड्गधारां हस्तेन स्पृशन् इतस्ततः चालितवान्। अनन्तरं कोषतः जलं निष्कास्य खड्गं पुनः कोषे स्थापितवान्।

'अहं विशेषभाग्यशाली। शतयोजनदूरं विनायासम् अतिक्रम्य अत्र आगतवान्। एतन्मध्ये मकरस्य मुखे पतितः इव। तथापि विनापायं तीरं प्राप्तवान्। आत्मरक्षणस्य एकैकं साधनं खड्गः अपि कुत्रापि न पतितः। एतत्सर्वं पूर्वकृतपुण्यस्य फलम्। तदस्तु नाम। अग्रे मया किं करणीयम्?'' इति चिन्तयन् चन्द्रवर्मा उत्थितवान्। जागरूकतया अग्रे गच्छन् वृक्षाणां मध्यतः सर्वत्र दृष्टिं प्रसारितवान्।

समीपे उन्नतः पर्वतः तेन दृष्टः। अत्युन्नतं पर्वतशिखरं दूरतः अस्पष्टं दृश्यते स्म। सोपानक्रमेण पर्वतस्य अधोभागः क्रमशः विशालः आसीत्। पर्वतस्य अखण्डता मनसि कल्पिता चेत् विपरीततया स्थापिता भ्रमरिका इव दृश्यते स्म पर्वतः। कश्चित् एकवारम् एतं विशिष्टं पर्वतं पश्यति चेत् पुनः कदापि सः न विस्मरिष्यति।



"एषः पर्वतः एव मान्त्रिकस्य वासस्थानम्। अहम् इदानीं एतस्य समीपम् आगतवान् अस्मि। एतस्य मान्त्रिकस्य पूजागृहे स्थितः शङ्खः मम अपेक्षितः। स च शङ्खः सर्पस्य कण्ठे उत्तोलितः अस्ति। सर्पः च भित्तौ आणिम् अवलम्ब्य तिष्ठति। एतं शङ्खं नीत्वा कापालिकायाः हस्ते ददामि चेत् मम कर्तव्यं समाप्तम्। एतावत्पर्यन्तं तु सर्वं निर्विघ्नतया सम्पन्नम्। दैवबलात् अविचिन्तिताः लाभाः अपि प्राप्ताः। इतः परं कथम्? पर्वतस्य आरोहणं कथं करणीयम्? कथं वा शङ्खः वशीकरणीयः?"

एमं चिन्तयन् चन्द्रवर्मा दीर्घं निश्वसितवान्। कापालिकागृहतः प्रस्थानसमये प्रधानसमस्या तु 'शतयोजनदूरं कथं गन्तव्यम्?' इति आसीत्। पर्वतप्रान्तं प्राप्तस्य तस्य इदानीं सा समस्या नास्ति। 'मान्त्रिकस्य मन्त्रगृहं प्रविश्य कथं शङ्खः वशीकरणीयः?' इत्येव तस्य समस्या इदानीम्। बहु चिन्तिते अपि, समस्यायाः परिहारे कोऽपि उपायः न स्फुरति।

गम्भीरं चिन्तयन् चन्द्रवर्मा नेत्रं निमील्य उपविष्टः आसीत्। तदा अकस्मात् विचित्रः शब्दः तेन श्रुतः। कर्णकठोरं तं शब्दं श्रुत्वा चन्द्रवर्मा दिग्भ्रान्तः। भीतम् आत्मानं यावत् सः सान्त्वयन् आसीत् तावता पुनः एकवारं सः शब्दः श्रुतः।

'एतं शब्दं पूर्वं श्रुतवान्' इति स्मृतवान् सः। वृक्षाणां मध्यतः समीपे एव सः शब्दः पुनः अपि श्रुतः। ओह्! एषः अग्निपक्षिणः ध्वनिः। ह्यः रात्रौ चन्द्रवर्मणा एषः शब्दः श्रुतः आसीत्। भेरुण्डयोः मेलनसन्दर्भे अग्निपक्षिणा एवं शब्दः कृतः आसीत्।

'विचित्रः एषः अग्निपक्षी यदि मां पश्यति तर्हि शत्रुशङ्कया आक्रमणं करोति एव' इति भावना उत्पन्ना चन्द्रवर्मणः मनसि। अपरक्षणे एषा भावना निराधारा इति सः चिन्तितवान्, यतः अग्निपक्षी दिने द्रष्टुं न शक्नोति। एवं तर्हि अग्निपक्षितः कोऽपि अपायः न भवेत्। किन्तु शङ्खमान्त्रिकस्य सहचरेभ्यः? ते कुत्र

सन्ति, केन रूपेण सन्ति इति चन्द्रवर्मा किमपि न जानाति। मान्त्रिकस्य अनुचराः ते मायाम् अश्रित्य येन केनापि रूपेण स्थातुम् अर्हन्ति किल ?

विविधविकल्पान् चिन्तयन् चन्द्रवर्मा क्षणकालं यापितवान्। अनन्तरं सः धैर्येण अग्रे प्रस्थितः। 'कदाचित् सम्भाव्यमानस्य अपायस्य विषये इदानीम् एव गाढचिन्तनेन किं प्रयोजनम्? अपायतः आत्मानं रक्षयितुं जागरूकतया भवितव्यम्। यत् भवति तत् भवतु नाम' इति सः आत्मनः सान्त्वनं कृतवान्। कुलदेवतां मनसा नमस्कृत्य स्वक्षत्रियकुलं, बाहुबलं च सः स्मृतवान्। तदा अपरिमितं धैर्यम् आगतम्।

चन्द्रवर्मा तस्मिन् वने सञ्चारं कुर्वन् अपेक्षितानि फलानि खादितवान्। पर्वततः प्रवहतः लघुजलप्रवाहस्य मधुरं जलं पीतवान्। उदरं यदा पूर्णं तदा पूर्वापेक्षया अधिकस्फूर्तिः आगता।

अनन्तरं सः समीपे स्थितम् एकं वृक्षम् आरूढवान्। सः वृक्षः पर्णैः व्याप्तः, निलीय स्थातुम् अत्युपयुक्तः च आसीत्। वृक्षे उपविश्य सः रात्रिं प्रतीक्षमाणः आसीत्। रात्रौ एव पर्वतस्य आरोहणम् उचितम् इति तस्य अभिप्रायः।

दीर्घप्रयाणेन सः श्रान्तः। निद्रा तं बाधते स्म। अतः सः पतनं यथा न स्यात् तथा शाखानां मध्ये उपविश्य लताभिः स्वशरीरं बद्ध्वा



सुखं निद्रां कृतवान्।

सूर्यः मध्याकाशे आगतः। प्रचण्डः सूर्यातपः सर्वत्र प्रसृतः अस्ति। तथापि आतपेन चन्द्रवर्मणः काऽपि बाधा नास्ति। यतः वृक्षे पर्णानि अतीव सान्द्राणि सन्ति। अतः सः सूर्यास्तपर्यन्तम् अपि प्रपञ्चं विस्मृत्य गाढनिद्रायां मग्नः आसीत्।

रात्रेः द्वितीययामे चन्द्रवर्मा जागरितः। सः झटिति उत्थाय परितः दृष्टवान्। घनान्धकारे किं वा दृश्येत? समग्रः परिसरः नीरवः आसीत्। मन्दं प्रवहतः जलप्रवाहस्य ध्वनिः अस्पष्टं श्रूयते स्म। वायुना कम्पमानानां वृक्षाणां शाखातः 'किर् किर्' इति शब्दः तदा तदा उत्पद्यते स्म। एतदतिरिच्य कोऽपि शब्दः नास्ति। सर्वे जन्तवः निद्रायां लीनाः।

"अहो! उत्थाने विलम्बः जातः। तथापि एषः उचितः समयः। इदानीम् एव पर्वतम् आरुह्य शङ्खमान्त्रिकगृहसमीपं गच्छामि" इति चिन्तयित्वा चन्द्रवर्मा वृक्षतः अवतीर्णः। आत्मनि उत्साहम् आवाहयन् सः खड्गं कोषतः निष्कास्य इतस्ततः सशब्दं चालयित्वा पुनः तं कोषे स्थापितवान्।

अन्धकारे सस्यानि गुल्मान् कण्टकानि च दूरीकुर्वन् सः किञ्चित् दूरं गतवान्। तस्य दृष्टिः तु अग्निपक्षिणः अन्वेषणे मग्ना आसीत्। यतः रात्रौ अपायः चेत् स च अग्निपक्षितः एव। यदि एतत्प्रदेशे अग्निपक्षी न स्यात् तर्हि सः सुरक्षिततया मान्त्रिकस्य गृहं प्राप्तुं शक्नुयात्।

चन्द्रवर्मा पर्वतस्य मूलं यदा प्राप्तवान् तदा समीपतः एव वेदनापूर्णं क्रन्दनं श्रुतवान्। अपरक्षणे 'चन्द्रवर्मन्' इति अस्पष्टध्वनिम् अपि श्रुतवान् सः।

'एषः कण्ठध्वनिः कापालिकायाः एव' इति स्पष्टं ज्ञातवान् चन्द्रवर्मा। अतः "कापालिके!" इति वदन् सः शब्दम् अनुसरन् धावितवान्।

(अनुवर्तते)






# वरपरीक्षा

प्रयत्नशीलः त्रिविक्रमः निराशाशब्दम् एव अजानन् इव पुनरपि वृक्षस्य समीपम् आगतवान्। शवं वृक्षतः स्वस्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः वक्तुम् आरब्धवान्- 'अये ! महाराज ! मध्यरात्रे अस्मिन् असमये यत् भवान् महत्त्वाकांक्षया कार्ये प्रवृत्तः' तत् स्वहितार्थम् उत परोपकारार्थम् ? यदि स्वहितार्थम् एतस्मिन् कार्ये प्रवृत्तः तर्हि कृतवर्मा इव प्राप्तं फलम् अन्यस्मै न ददातु। कृतवर्मा किं कृतवान् इति ज्ञातुं भवतः कुतूहलं स्यात् किल ? एवं तर्हि कृतवर्मणः कथां शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा-

स्वर्णपुरस्य राजा कृतवर्मा। युवकः सः सर्वकार्येषु अपि उत्साही। एकदा सः मृगयार्थम् अरण्यं गतः, मार्गभ्रष्टः जातः च। एकाकी

## वेतालकथा



अटन् सः पिपासितः अभवत्। तत्समये सः कांचित् व्याधयुवतिं दृष्टवान्। सा अनुपम-सुन्दरी। तस्याः सौन्दर्यम् आस्वादयन् कृतवर्मा पिपासां विस्मृतवान्। कृतवर्मा निर्निमेषं तां पश्यति। सा युवतिः अपि कृतवर्माणं तथैव पश्यति।

किञ्चित्कालानन्तरं कृतवर्मा बाह्यप्रपञ्चं प्रविश्य हस्तसङ्केतेन स्वपिपासां तस्यै सूचितवान्। सा धावन्ती गत्वा कमलपत्रेण जलम् आनीतवती। आत्मना सह पितरम् अपि आनीतवती। कृतवर्मा दृष्ट्या कृतज्ञताभावं प्रकटयन् जलं पीतवान्। तदनन्तरं तस्याः पिता एतस्य नाम-कुलादिकं पृष्टवान्।

कृतवर्मा स्वनामकुलादिकं निवेद्य उक्तवान्- 'अहम् एतस्यां प्रीतिमान् अस्मि। यदि भवान् अङ्गीकरोति तर्हि अहम् एतां परिणीय मम राज्यं नेष्यामि। एषा देशस्य राज्ञी भविष्यति'' इति।

तदा तस्याः पिता उक्तवान्- "अहं व्याधराजः। एषा मम अद्वितीया पुत्री। यदि भवान् एतां परिणेतुं इच्छति तर्हि भवता मम राज्ये एव स्थातव्यं भवति'' इति।

राजा किञ्चित् निराशः। नागरिकप्रपञ्चं त्यक्त्वा अटविकानां मध्ये निवासं कर्तुं सः न इच्छति।

'किं करणीयम्?' इति चिन्तयन् आसीत् राजा कृतवर्मा। तदा सा युवतिः पितरम् पृष्टवती- "तात! अहं महाराजेन सह किञ्चित् वार्तालापं कर्तुम् इच्छामि। अस्तु वा?'' इति।

पिता तत् अङ्गीकृतवान्। तदा सा महाराजम् अन्यत्र नीत्वा उक्तवती- "भवान् पितुः सूचनाम् अङ्गीकरोतु। किञ्चित्कालं भवान् एव राजा भवतु। अत्रान्तरे अत्र राज्ये अन्यं नियोज्य मां भवतः राजधानीं नयतु'' इति।

'एषा व्याधयुवतिः अपि मयि प्रीतिमती अस्ति' इति राजा ज्ञातवान्। अतः सः व्याधराजम् 'अहं विवाहार्थं सिद्धः' इति सूचितवान्।

"एवं तर्हि वरपरीक्षार्थं व्यवस्थां करोमि" इति उक्तवान् व्याधराजः।

"कीदृशी वरपरीक्षा ?" इति पृष्टवान् कृतवर्मा।

"एतां ये परिणेतुं इच्छन्ति तेषां मध्ये मल्लयुद्धस्पर्धा आयोज्यते। एतेषु यः जयं प्राप्नोति सः राजकुमारीं परिणेष्यति" इति विवरणं दत्तवान् व्याधराजः। कृतवर्मा स्पर्धाम् अङ्गीकृतवान्।

परेद्युः एव स्पर्धा प्रवृत्ता। व्याधराजकुमारीं परिणेतुम् इच्छन्तः द्वादशयुवकाः मल्लयुद्ध-स्पर्धार्थम् आगतवन्तः। राजा द्विधा तेषां विभागं कृतवान्। कृतवर्मा स्वविभागे स्थितान् पराजितवान्। अन्यविभागे 'दीपः' इत्येकः सर्वान् पराजितवान्। अन्ते दीप-कृतवर्मणोः मध्ये मल्लयुद्धस्पर्धा प्रवृत्ता।

मल्लविद्यायां दीपः सर्वाणि तन्त्राणि जानाति। अतः सः सुलभतया महाराजं पराजितवान्। दीपस्य जयम् अभिनन्दन्ती व्याधयुवतिः आनन्देन करताडनं कृतवती। एतेन पराजितः कृतवर्मा विशेषतया खिन्नः।

किञ्चित्कालानन्तरं व्याधयुवतिः महाराज-समीपम् आगत्य एकान्ते पृष्टवती "भवान् तु महाराजः। अतः महत्या सेनया सह आगत्य मां नेतुं न शक्नोति ?" इति।

"चिन्तयामि" इति उक्त्वा महाराजः ततः



निर्गतः। व्याधजनानां साहाय्येन मार्गं ज्ञात्वा स्वराज्यं प्रतिगतवान् च।

अनन्तरदिने सः आस्थानिकं मल्लम् आहूय उक्तवान्- "अहं सर्वविधविद्यासु प्रवीणः अस्मि। किन्तु मल्लविद्यायां मम विशेषरुचिः न आसीत्। इदानीम् अहं तां विद्यां पठितुम् इच्छामि। मल्लेषु अद्वितीयः यथा स्याम् तथा भवता अहं सज्जीकरणीयः" इति।

आस्थानमल्लः सन्तोषेण एतत् अङ्गीकृत-वान्। एकमासाभ्यन्तरे महाराजः विशेषाग्रहेण मल्लविद्यायाः सर्वाणि तन्त्राणि ज्ञातवान्। अनन्तरं सः वीराधिवीरैः द्विशतसैनिकैः सह व्याधराजस्य समीपं गत्वा उक्तवान्- "यदि



इच्छामि तर्हि बलात्कारेण भवतः पुत्रीं नेतुं शक्नोमि। किन्तु तत् न उचितम्।' वर-परीक्षार्थं पुनः व्यवस्थां करोतु'' इति।

व्याधराजः पुनः स्पर्धाम् आयोजितवान्। एतस्यां स्पर्धायां कृतवर्मा विनायासेन दीपं पराजितवान्।

दीपस्य पराजयं दृष्टवत्याः व्याधयुवत्याः मुखे व्यकुलता उत्पन्ना। कृतवर्मा तां दृष्ट्वा उक्तवान्- ''गतस्पर्धायां अहं यदा पराजितः आसम्, तदा भवती करताडनं कृतवती। तदा अहं चिन्तितवान्- वीरत्वस्य अभिनन्दनं सहजम् इति। इदानीं दीपः पराजितः अस्ति। तदर्थम् एतावती व्याकुलता किमर्थम्?''

तदा व्याधयुवतिः उक्तवती- ''दीपविषये मम प्रेम अस्ति। मल्लविद्यायां सः भवन्तं पराजयति इति अहं जानामि स्म। 'सः यदि महाराजं पराजयति तर्हि तस्य श्रेष्ठता सर्वैः ज्ञाता भविष्यति' इति कारणेन अहं तदा स्पर्धार्थं भवन्तं प्रोत्साहितवती। किन्तु इदानीं तस्य परिणामः मया यथा चिन्तितः आसीत् तथैव जातः'' इति।

''एवं तर्हि सेनया सह आगत्य मां नयतु इति किमर्थं मां सूचितवती?'' इति कृतवर्मा आश्चर्येण पृष्टवान्।

व्याधयुवतिः क्षणकालस्य मौनानन्तरम् उक्तवती- ''विशालदेशस्य राजा मयि प्रीतिमान् सन् मदर्थं यदि सेनया सह आगच्छति तर्हि मम विशेषाभिमानं किल? यदि सः मां विशालराज्यस्य राज्ञीं कर्तुं सिद्धः स्यात् तर्हि ततोऽपि गौरवम्! 'तथापि अहं दीपम् एव परिणेतुम् इच्छामि' इति चेत् दीपविषयकं मम प्रेमाधिक्यं प्रमाणितं भविष्यति। अतः अहं तथा सूचितवती आसम्। इदानीं मम आशासौधः सम्पूर्णतया नष्टः'' इति।

अनन्तरं कृतवर्मा व्याधराजसमीपं गत्वा उक्तवान्- ''भवान् दीपेन सह भवतः पुत्र्याः विवाहं करोतु। यावदपि कष्टम् आपततु नाम, अहं भवतः साहाय्यकत्वेन तिष्ठामि'' इति।

''भवान् वरपरीक्षायां जितवान्। अतः अस्माकं सम्प्रदायानुसारं भवता एव सा परि-

णेतव्या'' इति उक्तवान् व्याधराजः ।

कृतवर्मा हसन्- ''वरपरीक्षा पूर्वम् एव प्रवृत्ता । तस्यां परीक्षायाम् अहं पराजितः । कन्यायाः वरपरीक्षा एकवारम् एव भवेत्, न तु द्विवारम्'' इति उक्त्वा स्वपरिवारेण सह राजधानीं प्रत्यागतवान् ।

वेतालः एवं कथां समाप्य अवदत्- ''राजन् ! कृतवर्मा स्पर्धायां जयं प्राप्य अपि किमर्थं तां सुन्दरीं युवतिं न परिणीतवान् ? तां परिणेतुम् इच्छन् एव किल सः तत्र गतवान् ? व्याधराजः अपि तां परिणेतुं निवेदयति । तथापि राजा किमर्थं न अङ्गीकृतवान् ? किमर्थं प्राप्तं फलं व्याधयुवकाय दत्तवान् ? मम सन्देहस्य उत्तरं जानन् अपि यदि भवान् मौनं तिष्ठति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः उक्तवान् ''वरपरीक्षा एकवारम् एव प्रचलति इति तु सत्यम् । द्वितीयवारं प्रवृत्ता स्पर्धा न वरपरीक्षा । एतं विषयं राजा व्याधराजम् उक्तवान् एव । 'महाराजः सामान्येन व्याधेन पराजयं प्राप्नोति' इति एतत् अवमानस्य विषयः । अतः एव कृतवर्मा मल्लविद्यायाः अभ्यासं कृत्वा पुनः अपि स्पर्धार्थम् आगतवान् । द्वितीयवारं तस्य आगमनं न वरपरीक्षायाः कृते, अपि तु बलप्रदर्शनार्थम् । 'कृतवर्मा एतं विषयं व्याधराजाय किमर्थं न निवेदितवान् ?' इति प्रश्नः उत्पद्येत । व्याधयुवकः दीपः स्वप्रेयस्याः निमित्तं मल्लविद्यास्पर्धार्थम् आगतवान्, न तु बलप्रदर्शनस्य इच्छया । यदि राजा बलप्रदर्शनार्थम् आगतः इति सः ज्ञातवान् स्यात् तर्हि युद्ध न कुर्यात् अपि । एवं च हस्तप्राप्तं फलं कृतवर्मा दीपाय न दत्तवान् । यतः दीपः पूर्वम् एव तत् फलं प्राप्तवान्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः शवसहितम् अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।





# महावञ्चकौ

पूर्वं कस्मिंश्चित् ग्रामे वेङ्कटः नाम धनिकः आसीत्। सिद्धः नाम तस्य उद्यानस्य पालकः। सिद्धस्य मासिकं वेतनं चत्वारि रूप्यकाणि। सिद्धः श्रद्धया उद्यानकार्याणि करोति। वेङ्कटस्य सूचनानुसारं सः नारिकेल-सस्यानि कदलीसस्यानि इत्यादीनि आरोपितवान्। शाकबीजानि अपि आरोपितवान्।

कालान्तरे सुन्दरम् उद्यानम् निर्मितम् अभवत्। सिद्धः स्वामिनं पृष्टवान्- "मम वेतनम् अधिकं करणीयम्" इति।

"इदानीं वा? तत् कथं शक्यते? नारिकेलवृक्षाः फलन्तु। तदा परिशीलयिष्यामः" इति उक्तवान् वेङ्कटः।

नारिकेलवृक्षाः फलिताः। अतः सिद्धः यजमानं प्रार्थितवान्- "वेतने रूप्यकद्वयस्य वा आधिक्यं भवेत् एव" इति।

तदा वेङ्कटः कोपं प्रदर्शयन् निर्दाक्षिण्यम् उक्तवान्- "अरे रे, महापुरुषः संवृत्तः भवान्। एषु दिनेषु किम् अधिकं कार्यम् अस्ति येन भवान् अधिकं वेतनं पृच्छति? अधिकं वेतनं दातुं न शक्यते एव। यदि इच्छति तर्हि कार्यं करोतु। अन्यथा इतः अन्यत्र गच्छतु" इति।

सिद्धः इदानीम् उभयसङ्कटे पतितः। इतः पूर्वम् उद्याने अहोरात्रं कार्यं कृतम् आसीत्। तद्दृष्ट्या इदानीं कार्यं न्यूनम् इति तु सत्यम्। कार्यम् अस्ति चेदपि श्रमः न्यूनः। अतः एव वेङ्कटः निर्दाक्षिण्यम् एवं वदति।

वेङ्कटस्य कठोरस्वभावेन सिद्धः उद्योगं तु न त्यक्तवान्, किन्तु चौर्यम् आरब्धवान्। प्रतिदिनं सः उद्यानतः नारिकेलफलद्वयम् चोरयति। तस्य विक्रयणेन धनं सम्पादयति।

एकसप्ताहाभ्यन्तरे एव 'उद्याने चौर्यं प्रचलति' इति वेङ्कटस्य सन्देहः आगतः। किन्तु चोरः कः इति तु न ज्ञातम्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

वेङ्कटः सिद्धं पृष्टवान्। सिद्धः "अहं किमपि न जानामि एव" इति उक्तवान्।

"एवं तर्हि रात्रौ जागरूकतया रक्षणं कुर्वन् चोरं गृह्णातु" इति उक्तवान् वेङ्कटः।

"रूप्यकद्वयं वेतनम् अधिकं ददातु। रात्रौ रक्षणं करोमि" इति उक्तवान् सिद्धः।

"तत् तु न शक्यम्। अहम् एव रात्रौ रक्षणं करोमि" इति उक्त्वा वेङ्कटः ग्रामदेवतायाः मन्दिरं गत्वा देवीं प्रार्थितवान्- "जगदम्ब! नारिकेलचोरः यदि मम हस्ते लभ्यते तर्हि भवत्यै पञ्च नारिकेलफलानि अजायाः बलिं च दास्यामि" इति।

तत्समये देवीं नमस्कर्तुं सिद्धः अपि तत्र आगतवान्। वेङ्कटस्य प्रार्थनां श्रुत्वा सः चिन्तितवान्- 'कीदृशः वराकः एषः! मह्यं रूप्यकद्वयं दातुम् एषः न इच्छति। किन्तु देव्यै अजाबलिं दातुम् अपि सिद्धः' इति।

अतः सः अपि प्रार्थितवान्- "देवी! मम चौर्यं प्रकटितं यथा न भवेत् तथा करोति चेत् यथाशक्ति भवत्याः सेवां करोमि" इति।

तद्दिने रात्रौ सिद्धः सावधानतया यजमानस्य उद्यानं प्रविष्टवान्। कूपस्य पार्श्वे स्थितं वृक्षम् आरुह्य एकं फलं उत्पाट्य दूरे क्षिप्तवान्। 'यजमानः आगतः चेदपि सः यत्र फलं पतति तत्र चोरस्य अन्वेषणं करोति' इति सिद्धस्य आलोचना।

किन्तु वेङ्कटः अपि बुद्धिमान् एव। सः जागरूकतया परिशीलयन् चोरः कूपस्य पार्श्वे



स्थितं वृक्षम् आरूढवान् इति ज्ञातवान् एव। अतः सः रज्जुं दण्डं च गृहीत्वा वृक्षसमीपम् आगत्य गर्जितवान्- "रे चोर! आगच्छतु अधः। अत्रैव भवन्तं बन्धयामि। दण्डेन उचितं पूजयामि च" इति।

वृक्षे स्थितः सिद्धः आत्मानं गोपयन् भीत्या तत्रैव उपविष्टवान्। अल्पे एव काले कूपतः 'धुढुम्' इति शब्दः आगतः। 'चोरः वृक्षतः कूपे उत्पतितवान्' इति चिन्तितवान् वेङ्कटः।

सः त्वरया कूपसमीपं गत्वा रज्जुं दण्डं च पार्श्वे स्थापितवान्। "अरे दुष्ट! मत्तः मोक्षं प्राप्तुम् इच्छति वा? किन्तु अहं भवन्तं न त्यजामि। अहम् अपि तरणं सम्यक् जानामि" इति वदन् सः अपि कूपे अवतीर्णः।

अन्धकारे इतस्ततः हस्तं चालयन् वेङ्कटः चोरम् अन्विष्टवान्। एकवारं चोरस्य शिरः हस्ते प्राप्तम् इव। किन्तु हन्त! चोरः वेङ्कटस्य मुखं पादेन प्रबलं ताडितवान्। विनायासं कूपात् बहिः आगत्य धावितवान् च।

चोरस्य आघातेन वेङ्कटः दिग्भ्रान्तः। "हस्तलब्धः चोरः पलायितः किल?" इति मनसि एव खेदम् अनुभूतवान्। अनन्तरं मन्दं गृहम् आगत्य निद्रां कृतवान्।

अनन्तरदिने वेङ्कटः देवमन्दिरं गत्वा देवीम् आक्षिपन् उक्तवान्- "अये मातः! भवती मां वञ्चितवती। हस्तलब्धः चोरः पलायनं कृतवान्। अतः अजायाः बलिं किं, नारिकेल-फलस्य नैवेद्यम् अपि नास्ति भवत्याः" इति।

तदा देवी पूजकस्य शरीरे प्रविश्य उक्तवती- "अये वेङ्कट! स्वयम् अकार्यं कृत्वा भवान् इदानीं माम् आक्षिपति। उद्यान-पालकाय प्रतिमासं रूप्यकद्वयम् अधिकं दातुं भवान् न सिद्धः। सिद्धाय यदि भवान् प्रतिमासं रूप्यकद्वयम् अधिकं दत्तवान् स्यात् तर्हि एतादृशकष्टं न अभविष्यत्" इति।

देव्याः वचनेन वेङ्कटस्य ज्ञानोदयः जातः। तद्दिने एव सः सिद्धाय प्रतिमासं रूप्यकद्वयम् अधिकं दातव्यम् इति निश्चितवान्।






# बुद्धिमती पत्नी

वीरपुरे केशवः नाम वणिक् आसीत्। एकदा सः अतीव अस्वस्थः अभवत्। तदा तस्य सेवकाः तदीयाम् असहायकतां सम्यक् ज्ञातवन्तः। अतः तत्सन्दर्भस्य दुरुपयोगं स्वीकुर्वन्तः ते वञ्चनया सर्वां सम्पत्तिम् अपहृतवन्तः। इदानीं औषधोपचारार्थं केशवेन गृहस्य अमूल्यवस्तूनां, पत्न्याः आभरणानां च विक्रयणं करणीयम् आपतितम्। अन्ते यथाकथञ्चित् सः स्वस्थः जातः। किन्तु गृहं सर्वथा रिक्तम् अभवत्।

एवं स्थिते अपि केशवः धैर्यं न त्यक्तवान्। 'कस्यापि मित्रस्य सकाशात् शतरूप्यकाणां ऋणं स्वीकृत्य पुनः वाणिज्यं करोमि' इति चिन्तयित्वा सः स्वबाल्यमित्रस्य जगदीशस्य समीपं गतवान्।

जगदीशः सन्तोषेण बाल्यमित्रं स्वागतीकृतवान्। केशवः स्वकीयां परिस्थितिं जगदीशाय सविस्तरं निवेद्य उक्तवान्- "मित्र ! इदानीं भवान् मह्यं शतरूप्यकाणाम् ऋणं ददाति चेत् बहु उपकाराय भवति। अहं पुनः अपि वाणिज्यं करोमि। शीघ्रम् एव भवतः ऋणं प्रत्यर्पयिष्यामि" इति।

तदा जगदीशः उक्तवान्- "केशव, यदि कश्चित् नारिकेलविक्रयिकः कदाचित् वृक्षतः पतनेन अङ्गहीनः भवति तर्हि सः तत् वाणिज्यं त्यजति, अन्यवाणिज्यं करोति च। पूर्वतनवाणिज्यस्य आश्रयणं न करोति। वणिक् अपि एवम् एव" इति।

मित्रस्य वक्रवचनेन केशवः यद्यपि बहु कुपितः, तथापि सः कोपं निगृह्णन् उक्तवान्- "नष्टभीत्या यः वाणिज्यं त्यजति, सः भीरुः एव। ज्ञातां वृत्तिं परित्यज्य अज्ञातवृत्तेः आश्रयणं बुद्धिमत्तायाः लक्षणं न। यदि अहं नारिकेलविक्रयिकः भवेयम्, कदाचित् यदि

"सुभद्रा"




वृक्षतः पतितः अपि स्याम्, तथापि तां वृत्तिं न त्यजामि। पतनादिविषये जागरूकः भवामि, तावदेव'' इति।

केशवस्य स्वाभिमानयुक्तेन वचनेन जगदीशः अपमानितः अभवत्। तथापि सन्तोषम् अभिनयन् सः उक्तवान्- ''केशव, भवतः वचनं तु युक्तिपूर्णम् अस्ति। किन्तु अद्यत्वे मम आर्थिकपरिस्थितिः न तावत् समीचीना। ऋणदातारः 'ऋणं प्रत्यर्पयतु' इति पृच्छन्तः सन्ति। ऋणस्वीकर्तारः ऋणं न प्रत्यर्पयन्ति। एवम् अस्ति मम दुरवस्था। कथं वा शतं रूप्यकाणि ददामि? मम विषये भवान् अन्यथा न चिन्तयतु। एतानि पञ्च रूप्यकाणि स्वीकरोतु। एतत् ऋणत्वेन न गणयतु'' इति।

एतया घटनया केशवः स्वमित्रस्य निजस्वरूपं ज्ञातवान्। मित्रहस्ततः पञ्च रूप्यकाणि स्वीकृत्य अन्यमित्राणां त्रयाणां गृहाणि अपि गतवान्। तेषाम् अपि परिस्थितिः न समीचीना आसीत्। ते अपि स्वकीयं सुखदुःखं निवेद्य अन्ते पञ्च रूप्यकाणि दत्त्वा ''एतत् न ऋणम्'' इति उक्तवन्तः।

'अहम् इदानीं निर्धनः अस्मि। अतः मह्यं कोऽपि धनं ददाति। सर्वे किमपि किमपि व्याजं वदन्ति' इति चिन्तयन् केशवः निराशया गृहं प्रत्यागतवान्। खेदं प्रकटयन् प्रवृत्तं सर्वं पत्न्यै सरलायै सविस्तरं निवेदितवान् च।

मित्राणां एतादृशं व्यवहारं श्रुत्वा सरला आश्चर्यचकिता खिन्ना च। ''अस्मिन् विशाले प्रपञ्चे भवतः केवलं चत्वारः एव स्नेहिताः वा! भवान् अत्रैव जन्म प्राप्तवान्। अत्रैव प्रवृद्धः च। बहुवर्षेभ्यः अत्रैव वाणिज्यं कुर्वन् अपि अस्ति। तथापि चत्वारः एव स्नेहिताः? अन्ये स्नेहिताः न सन्ति वा?'' इति सा पतिं पृष्टवती।

''स्नेहिताः तु बहवः सन्ति। बाल्यस्नेहिताः वाणिज्यस्नेहिताः, स्नेहितानां स्नेहिताः एवं पञ्चाशदधिकाः स्नेहिताः सन्ति। किन्तु तेन किं प्रयोजनम्?'' इति निराशया

उक्तवान् केशवः ।

"अस्तु, तेषां नामानि सङ्केतान् च ददातु" इति सरला उक्तवती ।

"तेन किं सिध्यति? नामानि सङ्केतान् च स्वीकृत्य भवती किं करोति?" इति केशवः पृष्टवान् ।

"अहम् इदानीं किमपि न वदामि, न किमपि करोमि च। यत् करणीयं तत् आवयोः पुत्रः हरिः करिष्यति" इति उत्तरं दत्तवती सरला। पत्न्याः वचनानुसारं केशवः सर्वेषां स्नेहितानां नामानि सङ्केतान् च स्मृत्वा लिखितवान्, पत्न्याः हस्ते दत्तवान् च।

हरिः चतुर्दशवर्षीयः बालकः। तस्य हस्ते पत्रं दत्त्वा सरला उक्तवती- "एतस्मिन् पत्रे यानि नामानि सन्ति तेषां गृहं गत्वा वदतु 'मम पिता मां शतरूप्यकाणां ऋणम् आनेतुं प्रेषितवान्' इति। यदि कोऽपि दातुम् उद्युक्तः भवति तर्हि भवान् वदतु- 'पिता स्वयम् आगत्य स्वीकरिष्यति' इति।"

हरिः सर्वाणि गृहाणि गत्वा सायङ्काले गृहं प्रत्यागतवान्। तस्य हस्ते एकः धनपूर्णः स्यूतः आसीत्। तत् दृष्ट्वा केशवः आश्चर्यचकितः अभवत्। सः पुत्रं पृष्टवान्- "कथम् एतत् धनं प्राप्तवान्?" इति।

"पितः! भवतः स्नेहितेषु कोऽपि शतरूप्यकाणाम् ऋणं दातुं न समर्थः। किन्तु सर्वे भवतः परिस्थितिं जानन्ति। अतः सर्वे पञ्च वा दश वा रूप्यकाणि दत्त्वा उक्तवन्तः- 'भवतः पिता शीघ्रम् एव पूर्वां स्थितिं प्राप्नोतु' इति। 'एतत् धनं प्रत्यर्पणीयं नास्ति' इत्यपि ते उक्तवन्तः" इति।

केशवः चिन्तितवान् यत् पत्न्याः बुद्धिमत्तायाः फलेन मम सङ्कटः परिहृतः इति।

अनन्तरं सः स्यूते स्थितं धनं गणितवान्। तत्र चतुःशतं रूप्यकाणि आसन्।

तेन धनेन केशवः पुनः वाणिज्यम् आरब्धवान्। चतुःपञ्चवर्षेषु सः स्वकीयां पूर्वां स्थितिं प्राप्तवान्।






# वैराग्यम्

काशीराज्ये ब्रह्मदत्तस्य शासनसमयः। तदा महाजनकः विदेहराज्यस्य राजा आसीत्। तस्य द्वौ कुमारौ। प्रथमः अनिष्टजनकः, द्वितीयः पोलजनकः।

वृद्धस्य महाजनकस्य मरणानन्तरं ज्येष्ठपुत्रः अनिष्टजनकः सिंहासनम् आरूढवान्। सः स्वीयम् अनुजं युवराजं कृतवान्। कालान्तरे युवराजः अग्रजस्य हत्यां कृत्वा सिंहासनम् अपहर्तुं प्रयत्नं कृतवान्। एतां वार्तां श्रुत्वा अपि अनिष्टजनकः तस्मिन् विषये औदासीन्यम् एव अवलम्बितवान्।

अग्रजस्य एवं रूपेण उदासीनभावेन अनुजस्य महत् आनुकूल्यम् एव जातम्। पोलजनकस्य अनेके अनुचराः आसन्। तेषां साहाय्येन सः एकं तन्त्रजालं प्रकल्पितवान्। अनन्तरं केनचित् मिथ्याव्याजेन कलहम् उत्पाद्य, अनुचरसहितः गत्वा अनिष्टजनकम् आक्रम्य तं हतवान्।

अनिष्टजनकस्य मरणसमये तस्य प्रधानमहिषी गर्भवती आसीत्। यदा सा अनिष्टजनकस्य मरणवार्तां श्रुतवती, तदा झटिति स्वीयरत्नाभरणादिकाम् एकस्मिन् कण्डोले निक्षिप्य तस्य उपरि जीर्णवस्त्राणि अवकरादिकं च स्थापितवती। अनन्तरं सा मलिनवस्त्राणि जीर्णातिजीर्णं चोलं च धृत्वा कण्डोलं शिरसि आरोप्य, राजभवनतः निर्गतवती।

किन्तु वराकी सा कुत्र गन्तव्यम् इति न जानाति। इतः पूर्वं कदापि सा राजभवनं त्यक्त्वा बहिः न गतवती। 'कालचम्पकनामकं नगरं कुत्रचित् अस्ति। तत्र सर्वे जनाः सज्जनाः' इति पूर्वं कदाचित् सा श्रुतवती आसीत्। अतः सा मार्गेण गच्छतः सर्वान् पथिकान्- "कालचम्पकनगरस्य मार्गः कः?" इति पृष्टवती। किन्तु केनापि उत्तरं न उक्तम्।

"जातककथा"

किञ्चित्कालानन्तरम् कश्चित् वृद्धः शकटं चालयन् तेन मार्गेण आगतवान्। सः राज्ञ्याः प्रश्नं श्रुत्वा "अहं कालचम्पकनगरम् एव गच्छन् अस्मि। भवती शकटे उपविशतु। गर्भवती खलु? तावद्दूरं पादाभ्यां गन्तुं न शक्नोति। भवत्याः क्लेशः यथा न स्यात्, तथा शकटं चालयन् भवतीं कालचम्पकनगरं प्रापयामि" इति उक्तवान्।

राज्ञी स्वीयकण्डोलं शकटे स्थापयित्वा शकटम् आरूढवती। शकटचालकः तां कालचम्पकनगरस्य पार्श्वे स्थिते ग्राममण्डपे अवतार्य अग्रे गतवान्। इदानीं पुनः किं करणीयम् इति राज्ञी न जानाति। अतः सा ग्राममण्डपे उपविश्य पथिकान् पश्यति स्म।

किञ्चित्कालानन्तरम् कश्चन ब्राह्मणः स्वशिष्यैः सह स्नानार्थं तेन मार्गेण गच्छन् मण्डपे उपविष्टां गर्भिणीं दृष्टवान्। तस्याः व्याकुलितं मुखं दृष्ट्वा ब्राह्मणस्य मनसि संशयः उत्पन्नः। सः स्वीयशिष्यान् बहिः एव स्थातुं सूचयित्वा, एकाकी मण्डपं प्रविश्य "का भवती? कस्यां विपत्तौ पतिता अस्ति? कथयतु" इति मन्दं पृष्टवान्।

"आर्य, अहं मिथिलानगरस्य राज्ञी। मम पतिः युद्धे मृतः। अतः अहम् अनाथा जाता। एतस्मिन् नगरे मम परिचितः कोऽपि नास्ति" इति उक्तवती।



"एवं तर्हि अहम् एव भवत्याः परिचितः बन्धुः इति चिन्तयतु। भवती मम गृहे निर्भयं स्थातुं शक्नोति। तदर्थम् इदानीम् एवं करोतु। इदं केवलम् एकं मिथ्यानाटकम्। भवती मम पादयोः पतित्वा उच्चैः रोदनं करोतु। तदा मम शिष्याः अत्र आगमिष्यन्ति। भवत्याः रहस्यस्य स्फोटः यथा न भवेत् तथा भवतीं रक्षयिष्यामि" इति उक्तवान् ब्राह्मणः।

तस्य वचनम् अनुसृत्य राज्ञी तस्य पादयोः पतित्वा उच्चैः रोदितुम् आरब्धवती। तस्याः रोदनशब्दं श्रुत्व सर्वे शिष्याः अन्तः प्रविश्य 'किम् एतत्? किं जातम्?' इति पृष्टवन्तः।

तदा ब्राह्मणः एवं कथितवान्- "एषा मम कनिष्ठा भगिनी। ग्रामतः मम निर्गमनान्तरम्

एषा जन्म प्राप्तवती। मम तु एतस्याः दर्शनस्य अवकाशः एव न आसीत्। अहं कदापि ग्रामं न गतवान् खलु? इदानीम् अनाथा एषा माम् अन्विष्यन्ती आगता अस्ति'' इति।

ब्राह्मणस्य वचनेषु सर्वेषां विश्वासः जातः। अनन्तरं ब्राह्मणः सलीलं तां स्वगृहं नीत्वा सादरं सत्कृतवान्। एवं रीत्या राज्ञी तत्र सुखेन वासं कुर्वती सकाले एकं पुत्रं प्रसूतवती। तस्याः इच्छाम् अनुसृत्य सः पुत्रः स्वपितामहस्य नामधेयम् एव प्राप्तवान्। एषः महाजनकः एव बोधिसत्त्वः।

महाजनकः तत्र यथाक्रमं वर्धमानः बाल्यं यापयन् आसीत्। तेन सह केचन क्षत्रिय-कुमाराः क्रीडन्ति स्म। ते कुमाराः तं प्रति अनादरं प्रदर्शयन्ति स्म। तदा महाजनकः क्रोधेन तप्तः तान् ताडयति। कुमाराः तु आक्रोशं कुर्वन्तः 'एषः विधवापुत्रः अस्मान् ताडयति' इति निन्दन्ति।

स्वीयमाता विधवा अस्ति इति तदा महाजनकः ज्ञातवान्। तर्हि मम पिता कः इति सः चिन्तयन् स्वजननीं पृष्टवान्। आदौ सा वास्तववार्ता न कथितवती। किन्तु यदा महाजनकः अत्याग्रहं कृतवान्, तदा सा सर्वं पूर्ववृत्तान्तं पुत्रं कथितवती।

स्वीयपितृव्यः अधर्ममार्गेण मिथ्याकलहम् उत्पाद्य महाराजं हत्वा, विदेहराज्यं वशीकृत-वान् इति वार्ता यदा महाजनकः ज्ञातवान्, तदा 'राज्यस्य पुनः प्राप्त्यर्थं यत्नः करणीयः



त्र' इति सः निश्चियं कृतवान्। षोडशे वर्षे महाजनकस्य विद्याभ्यासः समाप्तः। तदा सः स्वजननीं "मातः! चिन्तां न करोतु। अहम् इदानीं विदेहराज्यं जेतुं गच्छामि। भवत्याः समीपे किमपि धनम् अस्ति वा?" इति पृष्टवान्। सा कण्डोले रक्षितं धनकनकादिकं प्रदर्शितवती। तस्य धनस्य अर्धभागमात्रं गृहीत्वा महाजनकः मिथिलानगरं प्रति प्रस्थितवान्।

यदा कुमारः महाजनकः मिथिलानगरं प्रविष्टवान्, तद्दिने एव पोलजनकः मरणं प्राप्तवान्। यतः सः पार्श्ववायुरोगेण बहुकालतः पीडितः आसीत्।

अपुत्रस्य पोलजनकस्य अन्यः उत्तराधिकारी अपि न आसीत्। अतः राजपुरोहितः एकं रथं सज्जीकृतवान्। रथे राजकिरीटं, राजदण्डं, राजपादुके च स्थापितवान्। अनन्तरं तं रथं गजद्वारा चालयन् रथं यथेच्छं विसृष्टवान्। सचिवपुरोहितादयः रथम् अनुसृत्य गतवन्तः।

रथः किञ्चिद्दूरं गत्वा राजोद्याने यत्र महाजनकः विश्रान्त्यर्थम् उपविष्टवान् आसीत्, तत्र अकस्मात् स्थगितः अभवत्।

राजपुरोहितः महाजनकस्य समीपं गत्वा परीक्षितवान्। महाजनकस्य शरीरे राजचिह्नानि दृष्ट्वा आश्चर्यम् अनुभवन् – 'कृपया अनाथस्य विदेहराज्यस्य राजा भवान् एव भवतु' इति प्रार्थितवान्।

महाजनकः एव विदेहस्य राजा अभवत्। अनन्तरं तस्य विवाहः अपि जातः। सीवली-



देवी तस्य पत्नी। कालान्तरे तयोः एकः कुमारः जातः। महाजनकः पुत्रस्य नामकरणमहोत्सवं कृतवान्। पुत्रस्य नाम दीर्घायुः।

कालः गच्छति स्म। अनन्तरं कदाचित् नगरोद्यानस्य दर्शनं प्राप्तव्यम् इति महाजनकस्य इच्छा अभवत्। सः स्वीयं गजम् आरुह्य उद्यानं द्रष्टुं प्रस्थितवान्। उद्यानप्रवेश-समनन्तरमेव पार्श्वभागे मनोहरौ आम्रवृक्षौ दृष्टिगोचरौ जातौ। शाखोपशाखाभिः हरितपत्रैः च व्याप्तौ वृत्ताकारौ तौ वृक्षौ पथिकानां नयनानन्दं प्रापयतः स्म। एकः वृक्षः फल-पूर्णः आसीत्। अन्यस्मिन् वृक्षे फलानि न आसन्। महाजनकः फलपूर्णवृक्षतः एकं फलं गृहीत्वा खादितवान्। फलं बहुमधुरम् आसीत्। तेन सन्तुष्टः सः प्रत्यागमनसमये पुनः तस्य वृक्षस्य फलं भक्षयितव्यम् इति मनसि चिन्तितवान्।

महाजनकः यदा ततः अग्रे प्रस्थितवान्, तदा तस्य परिजनाः तस्य वृक्षस्य सर्वाणि फलानि स्वीकृत्य खादितवन्तः। केचन जनाः त्वरया तस्य वृक्षस्य शाखाः अपि उत्पाटित-वन्तः। एवंरीत्या सुन्दरः वृक्षः क्षणमात्रे बीभत्सरूपं प्राप्तवान्।

महाजनकः सम्पूर्णम् उद्यानं दृष्ट्वा यदा प्रत्यागतवान्, तदा जीर्णीकृतम् आम्रवृक्षं दृष्ट्वा स्तम्भितः जातः। पार्श्वस्थितः फलरहितवृक्षः पूर्ववत् मनोहरः एव आसीत्।

"एतेन एकः हितोपदेशः लब्धः। एतत् राजवैभवं फलपूर्णवृक्षसदृशम् एव। वैराग्यं तु फलरहितवृक्षसमानम्। तस्य केनापि किञ्चित् अपि क्लेशः न भवति। अतः एतत् समस्तं वैभवं त्यक्त्वा अहं वैराग्यम् एव स्वीकरोमि। तदेव वरम्" इति महाजनकः मनसि चिन्तितवान्।

(आगामिसञ्चिकायां समाप्ता भविष्यति)



अस्माकं नद्यः –

# विपाशा

कल्माषपादः नाम राजा कदाचित् अश्वम् आरुह्य अरण्यमार्गेण गच्छन् आसीत्। मार्गः विशालः न आसीत्। तदा शक्तिः नाम मुनिकुमारः महाराजस्य अभिमुखतया आगतवान्। “मार्गात् अपसरतु” इति राजा दर्पेण उक्तवान्।

“सन्यासिनां पुरतः विनयः विधेयता च प्रदर्शनीयः इत्येवः राजधर्मः। अतः महाराजस्य भवतः अपसरणम् एव न्याय्यम्” इति उक्तवान् मुनिकुमारः। एतेन वचनेन कुपितः कल्माषपादः शक्तिं सम्यक् ताडितवान्।





महाराजस्य अव्यवहारेण मुनिकुमारः कोपाविष्टः जातः। “राक्षसस्वभावयुतः भवान् राजपदव्यां स्थातुम् अनर्हः। अतः राक्षसः भवतु भवान्” इति सः शापं दत्तवान्। अपरक्षणे एव राजा राक्षसरूपेण परिवृत्तः अभवत्।



वशिष्ठमहामुनेः ज्येष्ठकुमारः एव शक्तिः। वशिष्ठविश्वामित्रयोः चिरवैरम्। अतः विश्वामित्रः कल्माषपादे भूतस्य आवाहनं कृतवान्। स्वभावेन राक्षसः कल्माषपादः भूताविष्टः सन् शक्तिकुमारस्य उपरि आक्रमणं कृतवान्। गलबन्धनपूर्वकं शक्तिं मारितवान् च।

एतेन अपि कल्माषपादः न सन्तुष्टः। सः साक्षात् वशिष्ठाश्रमं गतवान्। आश्रमे वशिष्ठः न आसीत्। राक्षसः एषः निरायुधान् मुनिकुमारान् मारयित्वा आश्रमम् अग्निना ज्वालितवान्।





किञ्चित्कालानन्तरं वशिष्ठः आश्रमं प्रत्यागतवान्। मृतान् कुमारान् दग्धम् आश्रमं च दृष्ट्वा सः दिग्भ्रान्तः। महता पुत्रशोकेन सः व्याकुलः अभवत्। तथापि "सर्वं दैवाधीनम्" इति आत्मानं सान्त्वयन् प्रतीकारसाधनस्य आलोचनम् एव परित्यक्तवान्।

पुत्रशोकं सोढुम् अशक्तः वशिष्ठः प्राणत्यागं कर्तुम् इच्छन् समीपस्थं पर्वतशिखरम् आरूढवान्। ततः नदी-प्रवाहे उत्पतितवान् च।





यद्यपि वशिष्ठः नदीप्रवाहे उत्पतितवान्, तथापि नदीप्रवाहेण सः कुत्रापि न नीतः। तं परितः जलम् अदृश्यम् अभवत्। कोमलाः सिकताः परितः दृष्टाः। 'नदीमाता मां रक्षयन्ती अस्ति' इति ज्ञातवान् वशिष्ठः।

तथापि मरणम् एव अभिलषन् वशिष्ठः नद्याः तीरम् अनुसृत्य गतवान्। गभीरस्य ह्रदस्य समीपे स्थित्वा आत्मनः पादौ हस्तौ च बद्ध्वा सः जले उत्पतितवान्।





नद्यां पतनसमनन्तरम् एव बन्धनानि छिन्नानि अभवन्। प्रवाहेण सः तीरम् नीतः। प्रवाहः शीतलैः जलबिन्दुभिः वशिष्ठस्य आयासं परिहरन् उपचारम् अकरोत्।

तदा वशिष्ठः नदीतीरे स्थितां दीनभावनया पश्यन्तीं स्वपुत्रस्य शक्तेः पत्नीं दृष्टवान्। सा आसन्नप्रसवा गर्भिणी। सद्यः एव एतस्याः गर्भतः पौत्रः उत्पद्यते इति सः स्मृतवान्। 'पौत्रनिमित्तं वा मया जीवधारणं करणीयम्' इति सः प्राणत्यागस्य इच्छां परित्यक्तवान्।






"मद्विषये एषा नदी अतीव प्रीतिमती। माता इव मां मरणात् रक्षितवती। वात्सल्येन उपचारं कृतवती च" इति चिन्तयित्वा वशिष्ठः पापविनाशिकां तां नदीं 'विपाशा' नाम्ना आहूतवान्। "विपाशानद्यां स्नानं नाम सौभाग्यस्य विषयः" इति जनाः भावयन्ति।



# जागरणम्

पूर्वं सिंहपुरमहाराजः अकस्मात् दिवङ्गतः। तदा तस्य कुमारः तरुणः कुमारवर्मा सिंहासनम् आरूढवान्। कुमारवर्मा क्रियाशीलः। आलस्यं वा औदासीन्यं वा तस्य नास्ति एव। अन्येषाम् अपि एतं दुर्गुणं सः न सहते।

एकदा सः रथे उपविश्य नगरमार्गेण उद्यानं गच्छन् आसीत्। मार्गे कश्चित् पिता स्वपुत्रं निन्दन् आसीत्-"अये अप्रयोजक! विद्याभ्यासार्थं भवन्तं गुरुकुलं यत् प्रेषितवान् तत् मम मूर्खता। भवान् गुरुकुले सुदीर्घं स्थित्वा केवलं पुस्तकपण्डितः जातः। लौकिकं व्यवहारज्ञानं किञ्चिदपि न सम्पादितवान् एव। गृहकार्यं कर्तुं भवतः शरीरं न इच्छति। कृषिकार्यार्थम् अन्यगृहोपयोगि कार्यार्थं वा भवान् अनुपयुक्तः सञ्जातः। किम् एतेन जीवनेन? गुरुकुलाध्ययनेन एव एवं जातम्" इति।

पिता एवं निरन्तरं तर्जयन् आसीत्। पुत्रः तु एतत् किमपि अश्रृण्वन् इव उदासीनभावनया उपविश्य पुस्तकपठने निरतः आसीत्।

कुमारवर्मा पितुः दुःखं ज्ञातवान्। पुत्रस्य असीमं निर्लक्ष्यम् अपि परिशीलितवान्। एतेन तस्य मनसि कश्चन विचारः स्फुरितः- "गुरुकुलेषु एतादृशाः अलसाः मन्दबुद्धयः च निर्मिताः भवन्ति। अतः गुरुकुलम् एकम् अपि यथा न स्यात् तथा आज्ञां कुर्मः चेत् एवं निरुपयोगिनः निर्मिताः न भवन्ति। तदा बालकाः मातापित्रोः उपकारकाः अपि भवन्ति। अतः गुरुकुलानि एव निषेद्धव्यानि" इति। तद्दिने एव "गुरुकुलचालनं निषिद्धम्" इति आज्ञा नगरे सर्वत्र सडिण्डिमघोषं प्रसारिता।

एवम् एव कानिचन दिनानि अतीतानि।



एकदा राजसभा प्रचलन्ती आसीत्। तदा कश्चन मध्यवयस्कः कोपेन ज्वलन् राजसभां प्रविष्टवान्।

कुमारवर्मा आगमनकारणं पृष्टवान्। तदा सः मध्यमवयस्कः उक्तवान्- "महाराज! एकपक्षतः पूर्वं चोराः मम गृहं प्रविश्य सर्वाणि वस्तूनि चोरयित्वा नीतवन्तः। एतं विषयम् ग्रामरक्षकप्रमुखाय निवेदितवान्। 'अहं चोरान् कारागारे स्थापयामि, भवदीयानि वस्तूनि यथा प्राप्येरन् तथा करोमि' इति सः उक्तवान्। किन्तु अद्यावधि चोरस्य बन्धनं न जातम्। एवं चेत् मम वस्तूनां प्राप्तिः न शक्यते एव। नागरिकान् चोरेभ्यः ये न रक्षन्ति तादृशैः रक्षकभटैः किं प्रयोजनम्? एतेभ्यः यत् वेतनं दीयते तत् अपि व्यर्थम् एव। एवं चेत् ग्रामरक्षकः किमर्थम्? लक्षशः रूप्यकाणि व्ययीक्रियन्ते किल? तत् किमर्थम्? प्रजाभ्यः सङ्गृहीतस्य करस्य अपव्ययं कुर्वन् अस्ति भवान्" इति।

तद्दिने रात्रौ कुमारवर्मा रक्षकभटव्यवस्थाविषये सुदीर्घं चिन्तितवान्। ये चोरान् कारागरे स्थापयितुं न शक्नुवन्ति तादृशानां रक्षकभटानां नियुक्तिः निष्प्रयोजिका इति सः निर्णीतवान्। "अतः एतस्याः समग्ररक्षणव्यवस्थायाः निषेधः एव उचितः मार्गः। तदानीम् एव अपव्ययः अवरुद्धः भविष्यति" इति चिन्तितवान्।

अपरस्मिन् दिने एव राजाज्ञा आगता यत् सर्वे रक्षकभटाः स्वस्थानात् निष्कासिताः सन्ति। रक्षकभटव्यवस्था निषिद्धा अस्ति इति।

महाराजः एतावता अपि न तृप्तः। समस्यायाः मूलकारणस्य अन्वेषणापेक्षया तत्सम्बन्धिव्यवस्थायाः निषेधः एव सुलभः मार्गः इति राजा निश्चितवान्। एवं चिन्तयन् सः सेनायाः विसर्जनम् अपि कृतवान्। यतः युद्धं कालान्तरे कदाचित् भवेत्, भवेत् वा न वा इत्यपि संशयः तिष्ठति एव। कालान्तरे जायमानस्य युद्धस्य कृते इदानीम् एव सैन्यसङ्ग्रहणं, सैनिकानां कृते अपारः व्ययः च अनुचितः किल?

एवमेव कवयः पण्डिताः कलाकाराः राजास्थानतः निष्कासिताः अभवन्। यतः ते केवलं सभाम् अलङ्कुर्वन्ति। अतः तेभ्यः यत् पुरस्कारादिकं दीयते तत् व्यर्थम् एव।

एतादृशविचित्रव्यवहारेण राज्ये अशान्तिः व्याप्ता अभवत्। अराजकता अपि कुत्रचित् उत्पन्ना। किन्तु महाराजः कुमारवर्मा एतत्किमपि अविगणयन् स्वस्थम् आसीत्।

एवं स्थिते कदाचित् माण्डलिकराजः शुक्रपालः राजद्रोहम् आचरन् सिंहपुरस्य उपरि आक्रमणं करोति इति वार्ता आगता। एतेन मन्त्री अनन्तमिश्रः चिन्ताकुलः अभवत्।

'इतः परम् अपि एवमेव तिष्ठामः चेत् अपायः निश्चितः' इति निश्चितवान् अनन्तमिश्रः। अतः सः महाराजम् उक्तवान्- "महाराज! समस्यानां परिहारार्थं भवता विविधाः मार्गाः आश्रिताः। एतेन राज्यस्य कियान् उपकारः सिद्धः इति यदि पश्यति तर्हि वरम् इति मम अभिप्रायः" इति।

राजा एतत् अङ्गीकृतवान्। तद्दिने सायङ्काले राजा मन्त्री च समीपग्रामं गतवन्तौ।

वटवृक्षस्य अधः उपविश्य सुखदुःखानां चिन्तनम्- एषः ग्रामस्य सम्प्रदायः। तद्दिने अपि सर्वे तत्र सम्मिलिताः आसन्। सर्वेषां मध्ये ग्रामप्रमुखाः उपविष्टाः आसन्। तेषां



पार्श्वे अन्ये चत्वारः अपि आसन्।

ग्रामप्रमुखेषु एकः नूतनानां चतुर्णां परिचयं कारयन् उक्तवान्- "एते पार्श्वग्रामतः आगताः ग्रामप्रमुखाः। महाराजस्य विचित्रव्यवहारेण वयम् इव एते अपि पीडाम् अनुभवन्तः सन्ति। गुरुकुलतः आगतम् एकम् अलसं दृष्ट्वा महाराजः चिन्तयति - गुरुकुलात् आगताः सर्वे अलसाः इति। अतः सः गुरुकुलानि एव उन्मूलितवान्। एतेन इदानीम् अस्माकं पुत्राः अलसाः मूर्खाः च सन्तः चौर्यादिकम् अकार्यं कुर्वन्ति। अस्माकं गौरवं नाशयन्तः सन्ति। एवं चेत् कथम्?" इति।

तदा पार्श्वग्रामीणः उत्थाय उक्तवान्- "एवम् एव कवीन् पण्डितान् च महाराजः

आस्थानतः निष्कासितवान्। तेषु अस्माकं ग्रामस्य अपि एकः कविः आसीत्'' इति।

एतत् श्रुत्वा अन्यः उत्थाय उक्तवान्- ''एतादृशाः श्रेष्ठाः कवयः पार्श्वराज्यं गतवन्तः। कवयः पण्डिताः च राजवंशस्य कीर्तिं चिरं स्थापयन्ति। एतादृशैः कलाकारैः कविभिः च हीना सभा राजसभा भवेत् वा? एतादृशदेशेन अगौरवम् अस्माकम्'' इति।

तदा पार्श्वग्रामीणः उक्तवान्– ''अयि भोः, इदानीम् अन्या गम्भीरसमस्या उत्पन्ना अस्ति। देशस्य समस्या अस्माकं समस्या। महाराजः सैन्यम् एव निराकृतवान् इत्यतः एतावत्पर्यन्तं यः माण्डलिकः आसीत् सः औद्धत्येन अस्माकं देशस्य उपरि आक्रमणं कर्तुम् उद्युक्तः अस्ति'' इति।

तदा अपरः ग्रामवृद्धः उत्थाय उक्तवान्- ''केवलम् अत्र उपविश्य वार्तालापेन किं प्रयोजनम्? वयं सर्वे ग्रामप्रमुखाः सम्भूय इदानीन्तनराजं सिंहासनतः अवतारयामः। नूतनं योग्यं सिंहासने उपवेशयामः। तदा देशस्य उन्नतिः भवेत्। एवं न कुर्मः चेत् समग्रः देशः अपाये पतेत्'' इति।

एतत् श्रुत्वा तत्र स्थिताः सर्वे सन्तोषेण करताडनपूर्वकम् 'युक्तम् एतत्' इति ऐकमत्येन उक्तवन्तः। एतत्सर्वं परिशीलयन् कुमारवर्मा दिग्भ्रान्तः अभवत्। सः मन्त्रिणा सह राजधानीं प्रत्यागतवान्।

अनन्तरं मन्त्रिणा सह पर्यालोच्य सः मन्त्रिणः सूचनानुसारं पूर्वम् उन्मूलिताः सर्वाः व्यवस्थाः पुनः स्थापितवान्। नागरिकाणां साहाय्येन अल्पे काले समर्थां सेनां सज्जीकृतवान्। विद्रोहकारिणं शुक्रपालम् आक्रम्य कारागारे स्थापितवान्। सर्वान् पण्डितान् कलाकारान् च आहूय तेभ्यः पुनः उचितं स्थानं दत्तवान्।

एवं च कुमारवर्मणः विषये यः दुराभिप्रायः आसीत् सः दूरङ्गतः अभवत्। एतदनन्तरं जनाः तं गौरवेण दृष्टवन्तः।





# आशा: अनन्ता:

कश्चित् ग्राम:। तत्र कश्चित् वृद्ध:। श्रीनाथ: तस्य पौत्र:। श्रीनाथस्य बाल्यकाले एव तस्य मातापितरौ दिवङ्गतौ। अत: वृद्ध: पितामह: एव तस्य पालनपोषणादिकं कृतवान्। तत्र तत्र अल्पाल्पकार्याणि कृत्वा किञ्चित् किञ्चित् सम्पादयति स्म स:। यदा अल्पकार्यार्थं गन्तुम् अपि न शक्तं तदा भिक्षाटनं कृतवान्। एवंरीत्या पौत्रपितामहयो: उदरपूरणं भवति स्म।

एवं स्थिते कदाचित् वृद्ध: अकस्मात् दिवङ्गत:। तदा विंशतिवर्षीय: श्रीनाथ: निर्गतिक: जात:। स: किमपि कार्यं न जानाति। भिक्षाटनस्य अपि अभ्यास: नास्ति।

पितामहस्य लघुपेटिकायां किञ्चित् धनम् आसीत्। तत् धनं गृहीत्वा स: मासत्रयं यापितवान्। अनन्तरम् उद्योगस्य अन्वेषणं कुर्वन् ग्रामे सर्वत्र अटितवान्। किन्तु सर्वे जना: "अलस: भवान् किं वा कार्यं करोति भो: ? गच्छतु, गच्छतु" इति तर्जितवन्त:।

एतादृशवचनानि श्रुत्वा श्रीनाथ: निर्विण्ण: अभवत्। गृहं विक्रीय, धनं गृहीत्वा स: ग्रामान्तरं गतवान्। तत्र एकम् अल्पं भाटकगृहं सम्पाद्य पुन: उद्योगस्य अन्वेषणम् आरब्धवान्। किन्तु तत्र अपि तस्य आशाभङ्ग: एव जात:। 'अत्र किमपि कार्यं नास्ति' इत्येव सर्वे उक्तवन्त:।

हस्तस्थितस्य धनस्य अपि समाप्तिकाल: सन्निहित:। एतया चिन्तया पीडित: स: रात्रिसमयम् अपि निद्राहीन: सन् एव यापयति स्म।

तादृशी एका रात्रि:। निद्राहीन: चिन्ता-मग्न: च श्रीनाथ: शयनात् उत्थाय, प्रकोष्ठत: बहि: आगतवान्। तदा गृहस्य यजमान्या: पुत्री प्रमीला मौनं बहि: आगत्य अङ्गणं



तीर्त्वा कूपसमीपं गतवती। पतितुम् उद्युक्ता च।

तां दृष्ट्वा सम्भ्रान्तः श्रीनाथः धावन् गत्वा तस्याः हस्तं गृहीत्वा "किमिदं भोः? मतिभ्रान्ता जाता वा?" इति क्रोधेन पृष्टवान्।

प्रमीला रोदनं कुर्वती, मन्दं मन्दं स्वीय-कष्टं निवेदितवती। तस्याः माता नास्ति। विमाता या अस्ति तस्याः विवाहयोग्यं पुत्रीद्वयम् अस्ति। इदानीं प्रमीलां कस्मैचित् धनिकाय वृद्धाय दत्त्वा विवाहं कर्तुम् इच्छति सा विमाता। वृद्धतः यत् धनं लभ्यते तेन स्वीय-पुत्रीद्वयस्य विवाहं साधयितुं तस्याः एषः प्रयत्नः।

"तादृशवृद्धेन सह विवाहापेक्षया मरणं वरम्। मां मुञ्चतु" इति उक्तवती प्रमीला।

"कष्टानां परिहारार्थं किञ्चित् सहनम् आवश्यकम्। एवंरीत्या अदूरदर्शितया कूपे पतनेन किमपि प्रयोजनं नास्ति। एतेन मार्गेण प्रयोजनं यदि स्यात् तर्हि अहम् अपि तं मार्गं अनुसरेयम्। किन्तु मानवजीवितम् अमूल्यम् अस्ति। जानातु" इति उक्तवान् श्रीनाथः।

प्रमीला किञ्चित्कालपर्यन्तं तस्य मुखं पश्यन्ती "अहम् इदानीं साक्षात् अपायानां गर्भे अस्मि। अस्मिन् समये नीति-वाक्यैः किं प्रयोजनम्? एवमेव तूष्णीं स्थास्यामि चेत् सप्ताहावधौ वृद्धेन सह जायमानं मम विवाहं कोऽपि न निवारयति" इति उक्त्वा क्षणानन्तरं पुनः "भवान् एव मां परिणीय एतस्मात् कष्टात् माम् उद्धर्तुं शक्नोति किल?" इति मन्दस्वरेण पृष्टवती।

तस्मिन् समये तस्याः आत्महत्याप्रयत्नं स्थगयितुम् इच्छन् श्रीनाथः 'तथास्तु' इति अङ्गीकृत्य तां गृहस्य अन्तः प्रेषितवान्। परेद्युः प्रातः तस्याः विमातुः समीपं गत्वा विवाहप्रस्तावं कृत्वा "अहं प्रमीलां परिणेतुम् इच्छामि" इति उक्तवान्।

"इच्छा कथं न भवेत् भोः? कोऽपि उद्योगः नास्ति। खादितुम् अन्नं नास्ति। धनस्य नामापि कदाचित् श्रुतवान् वा न वा! विवाहप्रस्तावं कर्तुं लज्जा न भवति वा भवतः?"

भवतः ?" इति क्रोधेन पृष्टवती प्रमीलम्मा: विमाता।

श्रीनाथः अवमानेन मौनं ततः निर्गतवान्। अनन्तरं सायङ्कालपर्यन्तम् उद्योगार्थं कृताः सर्वे प्रयत्नाः व्यर्थाः अभवन्। तेन अतीव दुःखितः सः प्रकोष्ठं प्रति गन्तुम् अनिच्छन् ग्रामतः बहुदूरे स्थितम् एकं घोरारण्यं गतवान्। कस्यचित् वृक्षस्य अधः उपविश्य तत्रैव निद्राधीनः जातः च।

मध्यरात्रसमये पार्श्वे जातेन महाशब्देन श्रीनाथस्य निद्राभङ्गः जातः। तस्य पुरतः एकः वृद्धः पिशाचः स्थितः आसीत्।



"एतस्यां भयङ्कररात्रौ मादृशाः क्रूरपिशाचाः यत्र सञ्चरन्ति तत्र एषः आगत्य निश्चिन्तभावेन निद्रां करोति किल! एतस्य धैर्यं श्लाघनीयम्! रे! मानव! उत्तिष्ठतु। एतत् मम स्थानम्। अन्यत्र गन्तुम् अहं न इच्छामि" इति उक्तवान् पिशाचः।

श्रीनाथः पिशाचं दृष्ट्वा भीतिं नैव प्राप्तवान्। सः "भवतः अपेक्षया भयङ्करतराणां मानवानां मध्ये स्थातुम् अशक्तः अहम् अत्र आगतवान् अस्मि। अस्तु, भवतः स्थाने भवान् एव तिष्ठतु। अहं वृक्षान्तरं गच्छामि। मत्कारणतः भवतः किमर्थं कष्टम्?" इति वदन् उत्थितवान्।

वृद्धपिशाचः तं दृष्ट्वा "किञ्चित् तिष्ठतु भोः। एवंरीत्या मानवानाम् निन्दनं करोति किल? भवतः किं कष्टम् आपतितम्?" इति पृष्टवान्।

श्रीनाथः स्वीयं समस्तवृत्तान्तं कथयित्वा "केनाऽपि प्रयत्नेन जीवनमार्गः न लब्धः। मादृशेषु कस्यापि विश्वासः नास्ति" इति उक्तवान्।

तस्य वचनं श्रुत्वा पिशाचः उच्चैः हसित्वा "एवं वा? अस्तु, अहं भवतः क्लेशान् परिहरामि" इति उक्त्वा वृक्षस्य कोटरतः अतिप्राचीनम् एकं ताम्राङ्गुलीयकम् आनीय "स्वीकरोतु भोः। एतत् भवतः अङ्गुल्यां धृत्वा यस्य कस्यापि समीपं गत्वा यत्किमपि पृच्छतु। सः झटिति अङ्गीकरोति। किन्तु एकं विषयं



सम्यक् स्मरतु यत् केवलं त्रिवारम् एव एतस्य महत्त्वं तिष्ठति। अनन्तरं नश्यति'' इति उक्त्वा अङ्गुलीयकं दत्त्वा अदृश्यः अभवत्।

श्रीनाथः अङ्गुलीयकम् अङ्गुल्यां घृत्वा ग्रामं प्रति प्रस्थितवान्। ग्रामं प्राप्य एकस्य धनिकवणिजः समीपं गत्वा ''आर्य, भवतः आपणे कृपया मह्यम् एकम् उद्योगं ददातु'' इति पृष्टवान्।

पूर्वं सः वणिक् ''कोऽपि उद्योगः नास्ति, गच्छतु'' इति श्रीनाथम् उक्तवान् आसीत्। इदानीम् अङ्गुलीयकमाहात्म्येन ''निश्चयेन ददामि भोः! इदानीम् एव कार्यारम्भं करोतु'' इति उक्तवान्।

श्रीनाथः तत्र वणिजः निर्देशानुसारेण कार्यं कृत्वा सायङ्काले प्रमीलायाः गृहं गत्वा तस्याः विमातरम् ''अहम् उद्योगं लब्धवान्। इदानीं प्रमीलां मह्यं दत्त्वा विवाहं करोतु'' इति पृष्टवान्।

''महान् प्रमोदः भोः! सप्ताहावधौ एव विवाहं कारयामि'' इति उक्तवती प्रमीलायाः विमाता। सप्ताहावधौ श्रीनाथ-प्रमीलयोः विवाहः जातः च।

दशद्वादशदिनानि अतीतानि। एकदा प्रमीला श्रीनाथं ''एतत् तु महत् आश्चर्यम्! एकस्मिन् दिने मम विमातुः मनः कथं परि-वर्तितम्? कथं तावत् शीघ्रं भवान् उद्योगं प्राप्तवान्?'' इति पृष्टवती।

श्रीनाथः प्रवृत्तं सर्वं निवेद्य ''एतत् सर्वं वृद्धपिशाचेन दत्तस्य प्राचीनस्य अङ्गुलीयकस्य महत्त्वम्'' इति उक्तवान्।

प्राचीनस्य ताम्राङ्गुलीयकस्य नामश्रवणसम-नन्तरम् एव प्रमीला ''हा! हन्त!'' इति आक्रन्दनं कृतवती। ''अद्य प्रातः पेटिकायाः स्वच्छीकरणसमये तत् प्राचीनम् अङ्गुलीयकं दृष्टवती। तत् मलिनम् अङ्गुलीयकं निष्प्रयो-जकम् इति मत्वा बहिः क्षिप्तवती च'' इति उक्तवती सा।

''एतावदेव खलु? किमर्थं सम्भ्रमः?'' इति श्रीनाथः शान्तभावेन पृष्टवान्।

तस्य वचनं श्रुत्वा प्रमीला क्रोधेन ''तादृश-

महिमयुक्तम् अङ्गुलीयकं प्राप्य अपि भवान् निष्प्रयोजकं वरद्वयं प्रार्थितवान्। मम विमातुः सकाशात् तत् गृहम् एव वरदक्षिणारूपेण याचनीयम् आसीत्। तस्य वणिजः समीपं गत्वा तस्य वाणिज्यलाभे अर्धभागम् एव प्राप्तुं शक्नोति स्म। इदानीं प्रथमं तत् अङ्गुलीयकम् अन्वेष्टव्यम्'' इति वदन्ती उत्थितवती।

श्रीनाथः तां स्थगतन् ''त्वरा मास्तु भोः! अस्माकं यावत् भाग्यम् अस्ति तावत् एव सिद्ध्यति। अन्यः कोऽपि तत् भाग्यं न्यूनं वा अधिकं वा कर्तुं न शक्नोति। अन्यथा भवत्याः एतादृशी बुद्धिः कथं जाता यत् तत् अङ्गुलीयकं क्षिप्तवती'' इति उक्तवान्।

एतत् किमपि अश्रृण्वती इव प्रमीला दीपं प्रज्वाल्य गृहस्य पृष्ठभागं गत्वा अङ्गुलीयकम् अन्विश्य आनीतवती।

सा तत् अङ्गुलीयकं स्वीयाङ्गुल्यां धृत्वा ''भूस्वामिनः समीपं गत्वा अर्धभूमिं याचितुं भवतः प्रायः दाक्षिण्यं स्यात्। अतः अहम् एव गत्वा पृच्छामि। मम अपि तस्य परिचयः अस्ति। एतत् अङ्गीकरोति खलु?'' इति पृष्टवती।

''अस्तु, पृच्छतु'' इति उक्त्वा श्रीनाथः उच्चैः हसन् ''इदानीं तत् अङ्गुलीयकं पुनः अवकरे क्षिपतु। अङ्गुलीयकं धृत्वा मम अनुमतिं पृष्टवती। अहम् अङ्गीकृतवान्। तेन अङ्गुलीयकस्य महिमत्रयं नष्टम्'' इति उक्तवान्।

अङ्गुलीयकस्य महत्त्वं सर्वथा नष्टम् इति ज्ञात्वा प्रमीला अतीव दुःखिता। तदा श्रीनाथः तां सान्त्वयन् ''अतृप्तिः एव दुःखस्य कारणम्। विंशतिदिनेभ्यः पूर्वं भवती केवलं विवाहम् अपेक्षितवती। इदानीं ततोऽपि अधिकस्य इच्छया दुःखिता अस्ति। अतः एव वदन्ति आशाः अनन्ताः इति'' इति उक्तवान्।

पत्युः वचनस्य यथार्थतां ज्ञात्वा प्रमीला ''सत्यम्। मदीयस्वभावस्य स्मरणेन मम एव लज्जा भवति'' इति उक्त्वा दुःखं त्यक्तवती।





# नारिकेलचोरः

सिन्थानगरे दावूदः नाम वणिक् आसीत्। सः स्ववस्तूनि उष्ट्रस्य उपरि आरोप्य ग्रामं ग्रामं गच्छति, वस्तूनां विक्रयणं करोति च। दावूदः प्रामाणिकः। सर्वेषु ग्रामेषु तस्य विषये सदभिप्रायः आसीत्। अतः दावूदः यावत् मूल्यं वदति तावत् विनाविरोधं यच्छन्ति स्म जनाः। दावूदः अपि दुराशां न करोति। प्रामाणिकतया यत् प्राप्यते तेन तृप्तः भवति।

सिन्थानगरे सलीमः नाम महावञ्चकः आसीत्। अलीमः तस्य स्नेहितः। एतौ मुग्धजनैः सह मधुरतया वार्तालापं कुर्वन्तौ तान् वञ्चयतः। वञ्चनया प्राप्तेन धनेन जीवतः च। यद्यपि जनाः एतयोः वञ्चनां जानन्ति, तथापि तौ कपटवेषेण सञ्चरतः इति कारणेन तयोः बन्धनं दुःशकम् आसीत्।

दावूदस्य स्वभावम् एतौ अपि ज्ञातवन्तौ। 'कथञ्चित् एषः वञ्चनीयः। यथेष्टं धनं सम्पादनीयं च' इति योजनां कृतवन्तौ।

एकदा दावूदः स्ववस्तूनि उष्ट्रस्य उपरि आरोप्य वाणिज्यार्थम् अन्यनगरं प्रति प्रस्थितः आसीत्। प्रयाणार्थं प्रस्थितं दावूदं दृष्ट्वा 'वञ्चनार्थम् एषः एव उचितः समयः' इति तौ वञ्चकौ चिन्तितवन्तौ। अतः तौ अपि उष्ट्रयोः उपरि वस्त्राणां बन्धम् आरोप्य दावूदम् अनुसृतवन्तौ।

मध्याह्ने दावूदः विश्रान्त्यर्थं एकस्य वृक्षस्य मूलम् आश्रितवान्। तदा एतौ वञ्चकौ तत्र मत्वा दावूदं नमस्कृत्य तस्य पार्श्वे उपविष्टवन्तौ। कुशलवार्तां पृष्ट्वा तदीयप्रशंसां कर्तुम् आरब्धवन्तौ- "अस्माकं सौभाग्येन एव अनुभविनः वणिजः भवतः मेलनं प्राप्तम्। वाणिज्ये आवां नूतनौ। उचितमार्गदर्शनेन आवाम् अनुगृह्णातु भवान्" इति।

सरलः दावूदः एतयोः वञ्चनाबुद्धिं न ज्ञात-

वान् एव। सः सन्तोषेण तयोः प्रार्थनाम् अङ्गीकृतवान्। अनन्तरं भोजनं कृत्वा ते सूर्यास्तपर्यन्तं विश्रान्तिं स्वीकृतवन्तः।

ततः प्रस्थाय ते सायङ्काले नगरं प्राप्तवन्तः। नगरसीमायां काचित् धर्मशाला आसीत्। "अत्र अद्य रात्रौ वसतिं कुर्मः। श्वः प्रातः नगरं प्रविशामः" इति ते निश्चितवन्तः।

दावूदः धर्मशालायाः पार्श्वे स्थिते स्तम्भे उष्ट्रं बद्धवान्। सलीमः अलमः च स्ववस्त्रबन्धं धर्मशालायाः प्रकोष्ठे स्थापयित्वा प्रकोष्ठं कीलितवन्तौ। दावूदम् उक्तवन्तौ च- "महोदय! आगच्छतु। समीपे यत्रकुत्रापि गत्वा भोजनं कृत्वा आगच्छामः" इति।

धर्मशालातः भोजनालयं गन्तुं समीपतरः मार्गः कश्चन आसीत्। स च मार्गः निर्जनः। 'भोजनानन्तरं प्रत्यागमनसमये केनापि उपायेन दावूदः मारणीयः। तस्य वस्तूनि सर्वाणि वशीकरणीयानि च' इति तयोः योजना आसीत्।

तदा दावूदः उक्तवान्- "क्षम्यताम्। मम इदानीं बुभुक्षा नास्ति। अन्यच्च मम समीपे रोटिका अपि अस्ति। किञ्चित्कालानन्तरम् अहं रोटिकां खादित्वा शयनं करोमि। अतः भवन्तौ भोजनार्थं गत्वा आगच्छताम्" इति।

दावूदस्य वचनेन तयोः निराशा जाता। तथापि 'पुनः अवकाशः प्राप्यते एव' इति चिन्तयित्वा तौ ततः निर्गतवन्तौ। धर्मशालायाः यजमानं भोजनालयविषये पृष्टवन्तौ। सः उक्तवान्- 'एतस्य भवनस्य किञ्चिद्दूरे दक्षिणतः वामतः च एकैकः भोजनालयः अस्ति' इति।



तदा सलीमः अलमम् उक्तवान्—"भवान् दक्षिणदिशि गत्वा भोजनालयतः किमपि क्रीत्वा आगच्छतु। अहं उत्तरदिशि गत्वा उत्तमं किमपि क्रीत्वा आगच्छामि। अनन्तरं भोजनं कुर्वः" इति।

"समीचीना आलोचना" इनि उक्तवान् सलीमः। अनन्तरम् उभौ अपि परस्परं विरुद्धदिशि गत्वा आगतवन्तौ।

"किम् आनीतवान् भवान्?" इति पृष्टवान् सलीमः।

"रोटिकां क्षीरं च आनीतवान्" इति अलमः उक्तवान्। "अहो! अहम् अपि तदेव आनीतवान्" इति आश्चर्यं प्रकटयन् उक्तवान् सलीमः।

तदा अलमः सूचितवान्- "तर्हि एवं कुर्वः। अहं यत् आनीतवान् तत् भवान् खादतु। भवान् यत् आनीतवान् तत् अहं खादामि" इति।

"समीचीना सूचना। अहम् अपि एवम् एव वदामि इति चिन्तयन् आसम्" इति उक्तवान् सलीमः।

अनन्तरं तौ आत्मना आनीतम् अन्यस्मै दत्वा खादनार्थम् उपविष्टवन्तौ। अल्पे एव काले उभयोः अपि वमनम् आरब्धम्। वेदनाम् अनुभवन्तौ तौ भूमौ लुठनं कृतवन्तौ। उभयोः कोलाहलं श्रुत्वा जनाः समीपम् आगतवन्तः। एतौ परस्परम् अन्यम् अङ्गुल्या निर्दिशन्तौ प्राणान् त्यक्तवन्तौ।

वस्तुतः तयोः वञ्चकयोः चिन्तनं समानम् आसीत्। आहारार्थं यदा प्रस्थितं तदा तौ मार्गे चिन्तितवन्तौ- "दावूदस्य सम्पत्तिं यदा अपहरावः तदा अर्धभागः स्नेहिताय अपि दातव्यः भवति। अतः प्रथमं स्नेहितः निवारणीयः" इति। अनन्तरम् उभौ अपि क्षीरे विषं योजितवन्तौ। तत्परिणामतः स्वयं मरणं प्राप्तवन्तौ च।

सहप्रवासिनोः मरणेन दावूदस्य अतीव दुःखं जातम्। सः खेदं प्रकटयन् तत्रस्थान् उक्तवान्- "हन्त! एतौ मम नगरस्य वणिजौ। दौर्भाग्येन मरणं प्राप्तवन्तौ" इति।

तदा तत्रत्याः अन्ये वणिजः मृतयोः शरीरं परीक्ष्य उक्तवन्तो- "मित्र! एतौ न वणिजौ। अस्माकं नगरस्य प्रसिद्धवञ्चकौ एतौ। बहुवारम् एतौ कारागारवसतेः रुचिं दृष्टवन्तौ" इति।

तेषां वचनेन 'वञ्चकयोः चिन्तनं कीदृशम् आसीत्' इति ज्ञातवान् दावूदः। सः प्राणरक्षकं देवं कृतज्ञतापूर्वकं स्मृतवान्।






तारकासुरः स्वकोपं निगृह्णन् ध्यानभवनं गतवान्। तत्र पञ्चाक्षरीमन्त्रं जपन् शिवध्याने लीनः जातः च। तदा काचित् अशरीरवाणी श्रुता- "तारक! चिन्ता मास्तु। अहं भवते मोक्षं ददामि" इति। एतेन समाधानं प्राप्य तारकः पूजां समाप्य शिवलिङ्गं कण्ठे धृत्वा पुनः युद्धभूमिं प्रविष्टवान्।

षण्मुखतारकयोः मध्ये घोरं युद्धं प्रवृत्तम्। षण्मुखस्य प्रबलानि अस्त्राणि अपि निष्प्रयोजकानि जातानि। तदा तत्र आगतः नारदः सूचितवान्- "यावत् तारकस्य कण्ठे शिवलिङ्गं तिष्ठति तावत् केनापि शस्त्रेण तस्य अपायः नास्ति" इति।

एतत् वचनं स्मरन् षण्मुखः तारकासुरस्य कण्ठे स्थितं शिवलिङ्गम् उद्दिश्य आग्नेयास्त्रस्य प्रयोगं कृतवान्। तदा शिवलिङ्गं पञ्चधा भग्नं, अधः पतितं च। सूर्यः विश्वकर्मा च झटिति आगत्य पतितान् शिवलिङ्गस्य खण्डान् नीत्वा पञ्चसु स्थलेषु प्रतिष्ठापितवन्तः। तानि पञ्च स्थलानि एव भीमलिङ्गेश्वरनाम्ना प्रसिद्धानि।

यदा तारकस्य कण्ठतः शिवलिङ्गं पतितं भग्नं च तदा षण्मुखः ब्रह्मास्त्रं प्रयुक्तवान्। तारकस्य संहारं कृतवान् च। एतेन तुष्टाः देवाःषण्मुखस्य उपरि पुष्पवृष्टिं कृतवन्तः।

'केनापि मारयितुम् अशक्यं तारकासुरं मारितवान्' इति कारणतः सर्वे देवाः षण्मुखम् अभिनन्दितवन्तः। एतदनन्तरं षण्मुखः

८. श्रीवल्लीविवाहः



किञ्चित्कालं यावत् स्वर्गलोके एव आसीत्। अनन्तरं मातापित्रोः सेवां कर्तुम् इच्छन् कैलासं गतवान्।

कदाचित् षण्मुखः स्वमित्रैः सह वनविहारार्थं गतवान्। मार्गमध्ये त्रिलोकसञ्चारी नारदः मिलितवान्। षण्मुखः नारदमहामुनिं नमस्कृत्य पृष्टवान्- "मुनिवर ! त्रिलोक्यां कः विशेषः ?" इति।

"देवसेनापते ! भवतः कृपया सर्वलोकेषु सर्वे सुखिनः सन्ति। भवता राक्षसानां संहारः कृतः इति कारणतः इदानीं यज्ञयागादयः निर्विघ्नतया प्रचलन्ति। किन्तु अहं काञ्चित् विशेषवार्तां निवेदयितुम् इच्छन् अत्र आगतवान्। अत्रैव समीपे भिल्लपुरं नाम राज्यम् अस्ति। तस्य अधिपतिः भिल्लराजः पुलिन्दः। सः श्रेष्ठः ईश्वरभक्तः।

बहोः कालतः तस्य सन्तानम् न आसीत्। पतिपत्न्योः एतद्विषये महती चिन्ता आसीत्। एवं स्थिते भिल्लराजः कदाचित् वने काञ्चित् स्त्रीशिशुं प्राप्तवान्। तस्याः नाम 'वल्ली' इति निश्चितम्। महत्या प्रीत्या तौ तां पालितवन्तौ। वल्ल्याः सौन्दर्यं वर्णयितुम् अहं न शक्नोमि एव। सा साक्षात् सुवर्णनिर्मिता एव। कदाचित् ब्रह्मणा सह वार्तालापसन्दर्भे मया ज्ञातं यत् सा भवतः पत्नी भविष्यति इति। इदानीं सा प्राप्तवयस्का अस्ति। तस्याः पाणिग्रहणेन भवान् सर्वान् सन्तोषयतु" इति उक्तवान् नारदः।

अनन्तरं सः षण्मुखस्य अनुमतिं प्राप्य ततः निर्गतवान्। भिल्लराजस्य पुलिन्दस्य समीपं गतवान् च। पुलिन्दः अर्घ्यपाद्यादिभिः नारदस्य सत्कारं कृत्वा उक्तवान्- "मुनिवर्य ! मम पुत्र्याः विवाहविषये अहं चिन्तयन् आसम्। मम पुत्र्याः अनुरूपः वरः कुत्र लभ्येत इति सूचयन्तु कृपया" इति।

"भवतः पुत्र्याः वल्ल्याः विषये अहं सर्वं जानामि। तस्याः अनुरूपः वरः शिवस्य पुत्रः षण्मुखः। यदि षण्मुखः एतां परिणेष्यति तर्हि तयोः दाम्पत्यम् अनुरूपं भविष्यति। अल्पे एव काले वनविहारार्थम् आगतः षण्मुखः




वल्ल्यां प्रीतिमान् भविष्यति। सः एव स्वयं भवतः जामाता भविष्यति। अतः पुत्र्याः विवाहविषये भवतः विशेषश्रमः नास्ति एव। सर्वथा चिन्ता मास्तु। शिवकुटुम्बेन सह सम्बन्धः नाम भाग्यस्य विषयः एषः'' इति उक्त्वा नारदः ततः गतवान्।

वल्ल्याः सौन्दर्यवर्णनं श्रुतवतः षण्मुखस्य हृदये इदानीं मधुरभावानां तरङ्गाः! 'वल्ली-परिणेतव्या' इति भावना तस्य मनसि अङ्कुरिता। 'भिल्लजातीयां युवतिं परिणेष्यामि चेत् मातापितरौ बान्धवाः च किं वदेयुः' इति पुनः चिन्ता अपि। 'वृथाचिन्तनापेक्षया तस्याः दर्शनं वरम्' इति निश्चित्य सः वनविहारव्याजेन परिवारजनैः सह भिल्लपुर-समीपस्थं वनं गतवान्।

नारदस्य वचनैः षण्मुखः यथा चञ्चलीभूतः तथा वल्ल्याः मनः अपि चञ्चलं जातम्। स्वपितरम् उद्दिश्य नारदेन उक्तानि वचनानि सा श्रुतवती आसीत्। षण्मुखः स्वयम् अत्र आगमिष्यति इति उक्तवान् आसीत् किल नारदः? 'सः कीदृशः स्यात्? कदा वा अत्र आगच्छेत्?' इति सा बहुधा चिन्तयन्ती आसीत्। 'उच्चकुलीयः सः अज्ञातकुलगोत्रां भिल्लराजेन पालितां मां परिणयेत् वा?' इति तस्याः मनसि सन्देहः अपि। 'यदि षण्मुखः मां न परिणेष्यति तर्हि शरीरत्यागः एव उचितः'' इति सा निश्चयं कृतवती।

एकदा सा सन्तोषार्थं सखीभिः सह वनविहारार्थं गतवती। विहारानन्तरम् आयास-परिहारार्थं वृक्षस्य मूले उपविष्टवती च। तस्मिन् समये परिवारजनैः सह षण्मुखः अपि तत्र आगतवान्। सः समीपे एव अन्यस्य आम्रवृक्षस्य अधः उपविष्टवान् च।

अपरिचितस्य आगमनं ज्ञात्वा वल्ल्याः सखीषु काचित् षण्मुखस्य समीपं गत्वा पृष्टवती– ''एतत् अस्माकं राजकुमार्याः वल्लीदेव्याः विहारस्थलम्। अत्र पुरुषाणां प्रवेशावकाशः निषिद्धः अस्ति। एतत् भवान् न जानाति इति मन्ये। कः भवान्? कुतः आगतवान्?



किमर्थम् अत्र आगतवान् ?'' इति।

वल्ल्याः नामश्रवणेन पुलकितः षण्मुखः तां सखीम् उक्तवान्- ''मम नाम षण्मुखः। शिवपार्वत्योः पुत्रः अहम्। कैलासे मम वासः। भवती वल्लीदेव्याः सखी किल? तस्याः पिता कः? किं कुलं तस्याः?'' इति।

तदा सा सखी पूर्वकथां संक्षेपेण उक्तवती- ''एतत् भिल्लानां राज्यम्। राजा पुलिन्दः एतस्य पालनं करोति। भिल्लपुरं तस्य राजधानी। एषः वनप्रदेशः तस्य राज्यस्य सीमायाम् अन्तर्गतः। अस्माकं महाराजस्य सन्तानं नास्ति। पञ्चदशवर्षेभ्यः पूर्वम् अस्माकं महाराजः वने कञ्चित् स्त्रीशिशुं प्राप्तवान्। तां बालिकां स्वप्रासादम् आनीय प्रीत्या पोषितवान्। सा एव राजकुमारी वल्लीदेवी'' इति।

''भवत्याः सख्याः विवाहः जातः वा?'' इति पृष्टवान् षण्मुखः।

''विवाहः तु न जातः। किन्तु वरः निश्चितः अस्ति'' इति उक्तवती सा सखी।

''कः वरः? कदा विवाहः भविष्यति?'' इति कातरस्वरेण पृष्टवान् षण्मुखः।

''गतमासे महामुनिः नारदः अस्माकं राजधानीम् आगतवान् आसीत्। सः महाराजं सूचितवान् यत् शिवपुत्रः षण्मुखः भवतः पुत्रीं वल्लीदेवीं परिणेष्यति इति। एतत् रहस्ये श्रुतवती अस्माकं राजकुमारी तद्दिनात् आरभ्य अन्यमनस्का अस्ति। तस्याः व्याकुलतां द्रष्टुम् अशक्ताः वयं ताम् अत्र आनीतवत्यः। अस्माकं भाग्यम् अनुकूलकरम्। यतः भवान् एव स्वयम् अत्र उपस्थितः। भवान् अत्र क्षणकालं तिष्ठतु। अहम् इदानीं वल्लीदेवीम् अत्र आनयामि'' इति उक्त्वा सा सखी ततः गतवती। वल्लीम् तत्र आनीतवती च।

परस्परदर्शनेन उभौ अपि आकृष्टौ। उभौ अपि परिजनानाम् उपस्थितिं विस्मृत्य निर्निमेषं परस्परं दृष्टवन्तौ। षण्मुखः तस्याः हस्तं स्वहस्ते गृह्णन् उक्तवान्- ''वल्लि! अहं भवतीं परिणेष्यामि।''

लज्जया अवनतमुखी वल्ली मन्दस्वरेण उक्तवती ''कन्या सदा मातापित्रोः अधीना:

किल ? यदि भवान् मां परिणेतुम् इच्छति तर्हि प्रथमं मम मातापित्रोः अनुमतिं प्राप्नोतु'' इति। अनन्तरं सा कथञ्चित् षण्मुखहस्ततः स्वहस्तम् उन्मोच्य राजधानीं प्रतिगतवती।

वल्ल्याः सखीनां द्वारा पुलिन्दः समग्रवार्तां श्रुतवान्। अनन्तरं सः सम्भ्रमेण आगत्य कुमारं स्वागतीकृतवान्। सकलसत्कारानन्तरं पुलिन्दः षण्मुखम् उक्तवान्- ''श्वः प्रात.काले एव उत्तमः मुहूर्तः अस्ति। श्वः एव भवान् मम पुत्रीं परिणयतु'' इति।

अत्रान्तरे शिवपार्वत्यौ दूतद्वारा सूचितौ। तौ सपरिवारं भिल्लपुरम् आगतवन्तौ। देशस्य प्रमुखाः अपि उपस्थिताः। सर्वेषां ज्येष्ठानां समक्षं वल्लीषण्मुखयोः विवाहः सवैभवं सम्पन्नः।

....दिनानि अतीतानि। अत्रान्तरे शोणितपुरे गजासुरः नाम राक्षसः प्रबलः जातः। सः ब्रह्माणम् उद्दिश्य तपः कुर्वन् अनेकवरान् प्राप्तवान्। अधिकारदाहेन सः त्रिलोकीम् अपि आक्रम्य स्थितवान्। किन्तु शिवभक्तस्य तस्य राज्ये सर्वे जनाः सुखिनः आसन्।

एकदा नारदः गजासुरस्य राजधानीं शोणितपुरं गतवान्। गजासुरः आसनदानादिभिः तस्य यथायोग्यं सत्कारं कृतवान्। तदा नारदः पृष्टवान्- ''गजासुर! भवान् श्रेष्ठः ईश्वरभक्तः। 'मम हृदये स्थातव्यं भवता' इति शिवः किमर्थं न प्रार्थनीयः भवता ?''

गजासुरः नारदस्य प्रस्तावम् अङ्गीकृतवान्। निरन्तरपूजया सः शिवं तोषितवान्। एतेन प्रत्यक्षं शिवं नमस्कृत्य गजासुरः उक्तवान्- ''परमेश्वर ! भवान् सदा मम हृदये निवसतु'' इति।

शिवः गजासुरस्य प्रार्थनाम् अङ्गीकृत्य लिङ्गरूपेण तस्य हृदये निवासम् आरब्धवान्।

'शिवः कुत्र गतः ? तस्य का गतिः ?' इति पार्वती न जानाति। अतः चिन्तामग्ना सा शिवस्य अन्वेषणार्थं रुद्रगणीयान् सर्वत्र प्रेषितवती। अन्ते सा ज्ञातवती यत् शिवः गजासुरस्य हृदये लिङ्गरूपेण अस्ति इति।



# वृत्ति धर्मः

कृष्णपुरे भद्रेश्वरः नाम प्रसिद्धः ज्योतिषिकः आसीत् । सः हस्तं दृष्ट्वा भविष्यफलं वदति स्म। नष्टानि वस्तूनि कुत्र सन्ति इत्यपि सः ज्योतिष्यबलेन वदति स्म ।

एकदा सः कार्यनिमित्तं ग्रामात् बहिः गतवान् । महान् आतपः आसीत् । अतः सः छत्रम् अपि नीतवान् । प्रत्यागमनसमये विश्रान्त्यर्थं सः मार्गपार्श्वे स्थितायाः धर्मशालायाः पुरतः उपविष्टवान् । छत्रं स्वपार्श्वे स्थापितवान् च ।

श्रान्तिकारणतः सः उपविष्टः एव निद्रावस्थां प्राप्तवान् । यदा जागरणं जातं तदा पार्श्वे छत्रं न आसीत् ।

भद्रेश्वरः साक्षात् ग्रामाधिकारिणः समीपं गत्वा 'छत्रं कश्चित् चोरितवान्' इति निवेदितवान् ।

"भवान् तु महाज्योतिषिकः । उपविष्टः एव किं वस्तु कुत्र अस्ति इति ज्ञातुं भवान् समर्थः । एवं स्थिते छत्रस्य अन्वेषणं किं कष्टकरं वा भवतः ? चोरः कुत्र अस्ति इति ज्योतिष्यबलेन पश्यतु । अहं त चोरं दण्डयामि" इति हसन् उक्तवान् ग्रामाधिकारी ।

"तथैव कर्तुं शक्नोमि । किन्तु एवं एकवारं वक्तुम् अहं रूप्यकद्वयं स्वीकरोमि । भवान् यदि रूप्यकद्वयं ददाति तर्हि एतत्क्षणे एव ज्योतिष्यबलेन चोरः कुत्र गतः स्यात् इति वदामि" इति उक्तवान् भद्रेश्वरः ।

ग्रामाधिकारी लज्जया मौनम् उपविष्टवान् ।





# उपकारस्मरणम्

कोणपुरे प्राणेशः नाम निर्धनः आसीत्। कदाचित् सः कार्यनिमित्तं ग्रामाधिकारिणः समीपं गत्वा प्रार्थितवान्- "अहम् कष्टे अस्मि। कृपया साहाय्यं करोतु। अहम् आजीवनं भवतः नाम स्मरन् जीविष्यामि" इति।

वस्तुतः ग्रामाधिकारी महावक्रः। परोपकारस्य नाम अपि सः न स्मरति। तथापि इदानीं प्राणेशस्य अदृष्टम् इत्येव वक्तव्यम्! ग्रामाधिकारी कष्टात् मुक्तिं प्राप्तुम् उपायं सूचितवान्। प्राणेशः ग्रामाधिकारिणः मार्गदर्शनेन कष्टात् उन्मुक्तः जातः।

प्राणेशः यद्यपि निर्धनः तथापि अन्यैः कृतम् उपकारं सः कृतज्ञतापूर्वकं स्मरति। अतः ग्रामाधिकारिणे किमपि दत्त्वा कृतज्ञता प्रदर्शनीया' इति चिन्तितवान् सः।

एतद्विषये प्राणेशः परिचितानां मार्गदर्शनं पृष्टवान्। ते उक्तवन्तः- "भवान् किं वा ददाति? अथवा एवं करोतु- भवतः समीपे आम्रफलैः निर्मितः उपदंशः अस्ति किल? तदेव किञ्चित् ददातु" इति।

उपदंशस्य निर्माणे प्राणेशः सिद्धहस्तः। तद्ग्रामीणस्य धनिकस्य एकः आपणः अस्ति। तदर्थं सः धनिकः प्राणेशद्वारा उपदंशं कारयति। वेतनरूपेण धनं किमपि न ददाति। उपदंशम् एव किञ्चित् ददाति। एवं प्राप्तम् उपदंशं विक्रीय प्राणेशः कथञ्चित् जीवनं करोति।

'एषः एव युक्तः मार्गः' इति चिन्तितवान् प्राणेशः। अतः सः आम्रफलस्य उपदंशं ग्रामाधिकारिणे दत्त्वा कृतज्ञतां समर्पितवान्।

ग्रामाधिकारी उपदंशं स्वजनन्यै प्रदर्शयन् उक्तवान्- "अम्ब! प्राणेशः कृतम् उपकारं स्मरन् एतम् उपदंशं दत्तवान्। तेन प्रीत्या दत्तं तिरस्कर्तुम् अशक्तः अहम् एतं स्वीकृत-

वान्। प्राणेशेन निर्मितः उपदंशः नगरे अपि प्रसिद्धः। अद्यावधि वयम् तदीयम् उपदंशं न खादितवन्तः किल? अतः अद्य एव एतस्य उपयोगं कुर्मः'' इति।

'मम उपदंशस्य समानः उपदंशः अन्यः नास्ति' इति चिन्तयति स्म ग्रामाधिकारिणः माता। अतः सा उपदंशम् आघ्राय तिरस्कारं प्रदर्शयन्ती- ''कीदृशः कटुगन्धः! वाणिज्यार्थं निर्मितम् एतत्। वयं खादामः चेत् उदरवेदना उत्पद्येत। यदि प्राणेशेन दत्तम् इति व्यामोहः अस्ति तर्हि भवान् केवलं खादतु नाम'' इति उक्तवती।



ग्रामाधिकारी तद्दिने उपदंशस्य रुचिं दृष्टवान्। रुचिः तु असदृशी। अतः दिनद्वयं यावत् सः केवलम् उपदंशमिश्रितम् अन्नं खादितवान्। एतेन सः अजीर्णेन उदरवेदनया च पीडितः अभवत्। तस्य माता वैद्यम् आनेतुं जनं प्रेषितवती।

वैद्यः ग्रामाधिकारिणं परीक्ष्य उक्तवान्- ''भवान् तीव्रम् अस्वस्थः अस्ति। एतस्य निवारणार्थं रजतभस्म निर्मातव्यं भवति। यदि दशरूप्यकाणि दीयेत तर्हि सद्यः एव औषधं सज्जीकरिष्यामि। विलम्बेन प्राणापायः अपि भवेत्'' इति।

निरुपायः ग्रामाधिकारी वैद्याय दशरूप्यकाणि दत्तवान्। वैद्यस्य उपचारेण ग्रामधिकारी दिनद्वये स्वस्थः अभवत्।

ग्रामाधिकारी स्वभावेन कृपणः। 'प्राणेशेन दत्तस्य उपदंशस्य कारणेन आरोग्यं नष्टं, धनम् अपि नष्टम्' इति सः व्यथाम् अनुभूतवान्।

एकदा सः वैद्यम् आहूय सूचितवान्- ''मम रोगस्य चिकित्सार्थं भवान् दशरूप्यकाणि स्वीकृतवान्। तदस्तु नाम। किन्तु सर्वेषां पुरतः ५० रूप्यकाणि स्वीकृतानि इत्येव वक्तव्यम्। यदि एवं न वदति तर्हि अस्मिन् ग्रामे भवतः वसतिः क्लेशकरी भवेत्'' इति।

अनारोग्यसमये वैद्यस्य अपेक्षा आसीत्। किन्तु इदानीं एषः ग्रामाधिकारी वैद्यम् एव भीषयन् अस्ति। उपाध्यायाश्च वैद्याः च कार्यान्ते अप्रयोजकाः किल?



वैद्यः ग्रामाधिकारिणः विरोधम् अनिच्छन् "अस्तु श्रीमन्! भवान् यथा सूचितवान् तथा कथने मम कः क्लेशः? एतत् श्रुत्वा केचन अधिकं धनम् अपि दद्युः। तदा मम लाभः एव" इति उक्त्वा स्वगृहं गतवान्।

अनन्तरं ग्रामाधिकारी प्राणेशम् आहूय दर्पेण उक्तवान्- "अये! भवता दत्तस्य उपदंशस्य खादनेन अहं रोगपीडितः जातः। चिकित्सार्थं वैद्याय ५० रूप्यकाणि दत्तवान्। एतत् धनम् भवता एव दातव्यम्" इति।

तदा प्राणेशः दीनतां प्रदर्शयन्- "महोदय! अहं तु निर्धनः। तावत् धनं कुतः आनयेयम्?" इति पृष्टवान्।

"कुतश्चित् आनयतु भवान्। धनं तु भवता दातव्यम् एव। अन्यथा कठोरः दण्डः अनुभोक्तव्यः भविष्यति" इति कोपेन उक्तवान् ग्रामाधिकारी।

प्राणेशः मौनं ततः निर्गतवान्। साक्षात् वैद्यस्य गृहं गत्वा- "अये वैद्यमहोदय! भवतः कारणेन मया दण्डः अनुभोक्तव्यः आपतितः। कथञ्चित् कारागारं गन्तव्यम् एव। ततः पूर्वं भवन्तं मारयित्वा तृप्तिम् अनुभवामि" इति कोपेन उक्तवान्।

"मां मारयति वा? अहं कम् अपराधं कृतवान्?" इति कम्पमानेन स्वरेण पृष्टवान् वैद्यः।

"भवान् सामान्यरोगार्थम् अजीर्णार्थं ५० रूप्यकाणि स्वीकृतवान्। तत् धनं मया आनीय दातव्यम् इति ग्रामाधिकारी वदति। यतः मया पूर्वं तस्मै उपदंशः दत्तः आसीत्। निर्धनः अहं कुतः धनम् आनयामि? धनं न दत्तं चेत् कारागारप्राप्तिः तु अनिवार्या" इति वदन् प्राणेशः प्रवृत्तं सर्वं निवेदितवान्।

तदा वैद्यः आश्चर्यं प्रकटयन्—"एवं वा? भवादृशं निर्धनम् असहायं सम्यक् पीडयति किल सः? तर्हि एतस्मै नीतिः पाठनीया एव" इति उक्त्वा प्राणेशस्य कर्णे रहस्यं किमपि उक्तवान्।

तदा प्राणेशः वैद्यं कृतज्ञतापूर्वकं नमस्कृत्य उक्तवान्- "भवता अहम् उपकृतः। पूर्वम्

अहम् अन्यथा चिन्तितवान् आसम् । अतः भवन्तं ताडयितुम् आगतवान् । क्षाम्यतु भवान्'' इति ।

अनन्तरं प्राणेशः वैद्यम् अन्यग्रामप्रमुखान् च आत्मना सह नीत्वा ग्रामाधिकारिणः समीपं गतवान् ।

तत्र प्राणेशः पूर्वं प्रवृत्तं सर्वं निवेद्य 'न्यायदानं कुर्वन्तु' इति उपस्थितान् प्रार्थितवान् ।

कोऽपि ग्रामप्रमुखः ग्राधिकारिणः विरोधं कर्तुं न इच्छति स्म । अतः ते उक्तवन्तः- ''ग्रामाधिकारिणः रोगस्य कारणं भवता दत्तः उपदंशः एव । अतः चिकित्सार्थं यः व्ययः जातः स च भवता एव दातव्यः'' इति ।

तदा प्राणेशः ग्रामाधिकारिणं पुनः प्रार्थितवान् ''श्रीमन् ! मया तावत् धनं कथं दातुं शक्यम् ? निर्धनस्य मम विषये दयां प्रदर्शयतु कृपया'' इति ।

''ये अपराधं कृतवन्तः तेषां विषये मम दया एव नास्ति । यतः अहं ग्रामाधिकारी अस्मि । भवता धनं दातव्यम् एव'' इति निर्दयम् उक्तवान् ग्रामाधिकारी ।

एतत् श्रुत्वा प्राणेशः अकस्मात् मुखविकारं प्रदर्शितवान् । वक्षःस्थलं हस्तेन गृह्णन् कम्पमानः विकारध्वनिम् उत्पादयन् भूमौ पतितवान् । एतत् दृष्ट्वा सर्वे स्तब्धाः ।

वैद्यः प्राणेशस्य परीक्षां कृत्वा उक्तवान्-



''अकस्मात् आगतेन भावावेगेन असहनीयकष्टेन वा एवं भवति केषाञ्चित् । दीर्घकालिकेन औषधेन एषः रोगः निवारयितुं शक्यः । सद्यःशमनार्थं तु सुवर्णभस्म अपेक्षितम् । एषः तु निर्धनः । सुवर्णभस्मनिर्माणार्थं कः वा धनं दद्यात् ?'' इति ।

ग्रामप्रमुखाः परस्परं मुखं दृष्टवन्तः । तेषु एकः धैर्येण उक्तवान्- ''एतादृशसन्दर्भेषु कः मार्गः अनुसरणीयः इति ग्रामाधिकारिणा पूर्वम् एव प्रदर्शितम् । यस्य कारणेन रोगः आगतः सः चिकित्साव्ययं ददाति । ग्रामाधिकारिणः वचनेन एतस्य आघातः जातः । अतः ग्रामाधिकारी एव धनं ददाति'' इति ।

ग्रामाधिकारिणः इदानीम् उभयसङ्कटम् ।

प्राणेशस्य एतत् तन्त्रं, वैद्यः अपि अत्र सम्मिलितः अस्ति इति सः ज्ञातवान् एव।

ग्रामाधिकारी वैद्यं तीक्ष्णदृष्ट्या पश्यन् कोपेन पृष्टवान्- "आघातचिकित्सार्थं शत-रूप्यकात्मकः व्ययः वा ? किं वदति भवान् ?"

वैद्यः विनयेन उक्तवान्- "अजीर्णरोगस्य चिकित्सार्थं भवान् एव ५० रूप्यकाणि दत्तवान्। अजीर्णरोगः तु दिनद्वये शाम्यति। एषः आघातरोगः तु आजीवनं स्थास्यति। चिकित्सा न कृता चेत् मरणं निश्चितम्। प्राणेशः निर्धनः इति कारणतः एतादृशघोर-रोगस्य चिकित्सार्थम् अपि अहं शतं रूप्यकाणि एव उक्तवान्। वस्तुतः एतत् केवलम् औषधस्य मूल्यम्।"

"इदानीं किं करणीयम् ?" इति चिन्तयन् आसीत् ग्रामाधिकारी। अत्रान्तरे प्राणेशः एव मन्दम् उत्तिष्ठन् "मम किं अभवत् ?" इति पृष्टवान्।

तदा वैद्यः "भवान् अकस्मात् आघातेन भूमौ पतितवान्। एतस्य चिकित्सार्थं शतं रूप्यकाणि आवश्यकानि। भवता ग्रामाधि-कारिणे ५० रूप्यकाणि दातव्यानि आसन् किल ? तत् न्यूनीकृत्य ग्रामाधिकारी ५० रूप्यकाणि ददाति। चिकित्सायाः आरम्भार्थं भवता इतोऽपि ५० रूप्यकाणि दातव्यानि। ज्ञातवान् किल ?" इति उच्चस्वरेण द्विवारम् उक्तवान्।

तदा प्राणेशः उत्थाय ग्रामाधिकारिणः पादयोः पतित्वा "मम मरणं भवति चेत् भवतु नाम। भवान् तु साक्षात् धर्मावतारः। मम चिकित्सार्थं भवतः हस्ततः धनं स्वीकरोमि वा ? मम चिकित्सा अपि मास्तु, औषधम् अपि मास्तु" इति वदन् सः निर्गतवान् एव।

ग्रामाधिकारी अवमानेन शिरः अवनमय्य स्थितवान्। तद्दिनात् आरभ्य सः अन्याय्यमार्गं त्यक्तवान् एव। प्राणेशः अपि एतेन नीतिं पठितवान्। सः पुनः कदापि विशेषकारणं विना कस्मै अपि उपायनं न दत्तवान्।



# नार्वेदेशीयाः लेमिङ्ग्प्राणिनः

वर्षत्रये एकवारं मूषिकजातीयाः नार्वेदेशीयाः लेमिङ्ग्प्राणिनः विचित्ररीत्या व्यवहरन्ति। स्ववासस्थानतः पर्वततः प्रस्थाय समूहरूपेण समुद्रं प्रति गच्छन्तः एते जले प्रविश्य प्राणान् त्यजन्ति। एते किमर्थम् एवं कुर्वन्ति इति न ज्ञायते। प्रकृतेः वैचित्र्यम् एतत्।

सामान्यतः एकः लेमिङ्ग् वर्षे दश पुत्रान् प्रसूते। एतेन एतेषां सङ्ख्या तावत् वर्धते यत् आहारः सर्वथा अपर्याप्तः भवति। एवम् आहारस्य अभावेन पीडिताः एते आहारम् अन्विष्यन्तः 'समुद्रस्य अपरतीरे आहारः भवेत्' इति आशया समुद्रं प्रविश्य जले मज्जिताः भवन्ति इति केचन स्वाभिप्रायं प्रकटयन्ति।

नार्वेदेशे पर्वतश्रेणयः समुद्रस्य समीपे एव भवन्ति। लेमिङ्ग्प्राणिनः प्रयाणसन्दर्भे दिने आहारम् अन्विष्यन्तः, निद्रां कुर्वन्तः च रात्रौ समुद्रम् उद्दिश्य गच्छन्ति। मार्गे यावन्तः विघ्नाः आपतन्तु नाम, ते तान् अविगणय्य, समूहरूपेण सर्वं सम्मुखीकुर्वन्तः अग्रे गच्छन्ति। मार्गे पक्षिणः प्राणिनः च सुलभतया एतान् गृहीत्वा खादन्ति। अवशिष्टाः लेमिङ्ग्प्राणिनः समूहरूपेण अग्रे गच्छन्ति।

वर्तुलाकारं शिरः, वामनाः पादाः, ह्रस्वं पुच्छम् इति एतत् एतेषां स्वरूपम्। उत्तर-ऐरोप्यदेशेषु, एशीया- अमेरिकाखण्डेषु च एते सन्ति, तथापि नार्वेदेशे अत्यधिकसङ्ख्यया सन्ति। हरिततृणानि, किसलयाः, कोमलपत्राणि, वृक्षत्वचः च एतेषाम् आहाराः। गृध्राः, शृगालाः, उलूकाः वृकाः च एतान् विशेषतया खादन्ति। अतः एतेषां कुलं दिने दिने क्षीयमाणम् अस्ति।

ग्रीष्मकाले एते प्राणिनः बिलेषु निवसन्ति। शैत्यकाले तु पर्याप्तमात्रेण आहारं सङ्गृह्य हिमखण्डानाम् अधः वासं कुर्वन्ति। एतेषु एकविधानां प्राणिनां पादेषु शैत्यकाले दीर्घाः नखाः उत्पद्यन्ते। तैः नखैः ते बिलनिर्माणं कुर्वन्ति।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

| | |
|---|---|
| अङ्गुलीयकम् | A ring. |
| अदूरदर्शिता- | Short-sightedness |
| अभिनन्दनम् - | Congratulations |
| आघातः - | Shock |
| आघ्राय - | Having smelt |
| आतपः - | Sunshine |
| आसन्नप्रसवा - | About to deliver |
| उत्पाद्य - | Having produced |
| उपदंशः - | Pickles |
| उष्ट्रः - | Camel |
| कटु - | Hot taste |
| करः - | Tax |
| कवलः - | A morsel |
| कोटरः - | The hollow of a tree |
| क्रियाशीलः - | Active |
| गलः - | The throat |
| छत्रम्- | Umbrella |
| तूष्णीम् - | Silently |
| नियक्तिः- | Appointment |
| नि[illegible]ीय- | Having settled down |
| निर्निमेषं - | Without a wink of the eyelids |
| निर्वाणम् - | Extinction |
| पञ्जिका - | A file |
| प्रस्तावः - | Introduction |
| भाटकम् - | Rent |
| भ्रमरिका - | A top |
| मकरः - | A crocodile |
| यथार्थता - | Fact |
| लोहः - | Metal |
| विमाता - | Step-mother |
| विलयनम् - | Dissolution |
| वेष्टी - | Dhoti |
| व्यवहारज्ञानम् - | General knowledge |
| शाकः - | A vegetable |
| शाम्यति - | Comes down |
| सन्तानम् - | Offspring |
| सहनम् - | Forbearance |
| स्तम्भः - | Pillar |



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५.० /- रूप्यकाणि

### विजितां शीर्षिकां डिसेम्बर-८५ मासे प्रकटयिष्यामः।





❀ उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर २० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/– रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम् बेङ्गलूरु–५६०००४**

---

**'आगस्ट्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

**प्रथमचित्रम्– अधीहि सम्यक् यावत् न अत्येति वयः।**

**द्वितीयचित्रम्– स्वपिहि सुखं यावत् न अयाति चिन्ता।**

**प्रेषिका :** टि.वि. सुलोचनादेवी, ७/६३, गोपुरं वीथी, रङ्गनायकुलपेट, नेल्लूरु (आ. प्र.)

---

# भवन्तः जानन्ति वा ? (उत्तराणि)

**१. पैथागोरस्। २. एरटोस्तिन्स् ३. यतः ध्रुवप्रान्ते गुरुत्वाकर्षणशक्तिः अधिका।**

**४. रोटरडाम्। ५. आष्ट्रेलियानगरे।**

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# बीजावापः

| | |
|---|---|
| गोविन्दः- आगच्छतु परमेश, उपविशतु, कुशलं वा ? बीजावापः समाप्तः वा ? | Come on Paramesha, please sit down. How are you? Have you completed the sowing? |
| परमेशः- कथं बीजावापः ? वृष्टिः एव नास्ति! | No rains at all, how to sow? |
| गो- अन्या जलव्यवस्था नास्ति वा ? | No other arrangement to water the fields? |
| प- नास्ति भोः, वृष्टिप्रतीक्षा एव शरणम्। भवतः बीजावापनकार्यं समाप्तं वा ? | No, we depend entirely on rain? By the way have you finished sowing? |
| गो- आम्, गतसप्ताहे समाप्तम्। मम तु जलयन्त्रम् अस्ति। अतः चिन्ता नास्ति। | Yes, finished last week! I have a pump-set. So no problem. |
| प- अहम् अपि एकं जलयन्त्रं क्रेतुम् इच्छामि। किन्तु अद्यावधि न शक्तम्। | I too would like to buy a pump-set, but so far I have not been able to. |
| गो- किं भोः, एवं रोदिति ! यथेष्टं भूमिः अस्ति किल भवतः ? | What is your problem? You have enough lands! |
| प- भूमिः अस्ति, तथैव गृहे जनाः अपि अधिकाः सन्ति। | I have enough lands and also enough people at home. |
| गो- तत् तु सत्यम्। | That is true, of course. |
| प- अस्मिन् वर्षे भगिन्याः विवाहः अपि कृतः . . . । | We had also to perform our sister's marriage this year! |
| गो- वित्तकोषतः ऋणं स्वीकरोतु। | Get a loan from the bank. |
| प- ऋणशब्दश्रवणेन मम पिता कुप्यति | My father gets angry just at the mention of the word loan! |
| गो- किं भोः, सुशिक्षितःभवान् एवं वदति ? अधिकधनम् आयोजनीयम्। अधिका उत्पत्तिः प्राप्तव्या च। | Really strange that an educated man like you should say this. Don't you have to invest more in order to produce more? |
| प- पिता एतत्सर्वं जानीयात् किल ! सः तु पूर्वकालीनः। | My father does not understand all this. He is an oldtimer. |

# NEW! POWER PACKED SURF




नया पावर पैक्ड सर्फ़.

कण-कण में शक्ति का भंडार – पहले से कहीं ज़्यादा शक्तिशाली फ़ार्मूले से तैयार. गहरी सफ़ाई-धुलाई करे. सफ़ेद कपड़ों में लाए सफ़ेदी शानदार, रंगीन कपड़ों को बनाए सबसे चमकदार.

और यह सब करते हुए कपड़े को सही-सलामत रखे ताकि उसका नयापन बरकरार रहे, यानी हर कमीज़, हर चादर सदा लगे कोरी-कोरी, साफ़-सुथरी, ऐसी सफ़ेद – जैसे नयी.

धुलाई-दर-धुलाई!

**नयी निराली खुशबू**: जो आपके कपड़ों में बस जाए. इतनी स्वच्छ, इतनी ताज़ी!

**आकर्षक नया पैक**: नये फ़ार्मूलेवाले पावर पैक्ड सर्फ़ के लिए विशेष.

तो देर किस बात की... आज ही ले आइए अपना नया पावर पैक्ड सर्फ़!

## सर्फ़ की धुलाई सबसे सफ़ेद... कपड़े दिखते सदा नये!

LINTAS SU 325 2117 HI

हिन्दुस्तान लीवर का एक उत्कृष्ट उत्पादन